श्रीः

श्री पद्मावतीदेवीसमेतश्रीनिवासपरब्रह्मणे नमः

# भूमिका.



श्रीपरमहंसपरिव्राजकानां श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौमानां श्रीमन्निगमान्तमहादेशिकप्रवर्तितसंप्रदायनिर्वहणधूर्वहाणां निखिलविबुधनिरन्तरस्तूयमानविशदव्याख्यानकौशल–विशेषार्थवितरणचणविशिष्टानेकप्रबन्धनिर्माणप्रख्यातप्राविण्यानाम् उभयवेदान्ताचार्याणां श्रीमतां **श्रीकोळियालं स्वामिन** इति विख्यातानां **श्रीरङ्गरामानुजयतीन्द्राणां** महादेशिकानां श्रीचरणनलिनवरिवस्यालब्धसर्ववेदान्तार्थोऽहम्, तेषामेव निदेशमवतंसयन् उभयवेदान्तग्रन्थमालाग्रथनप्रवृत्तः द्रमिडदिव्यप्रबन्धव्याख्यानप्रकाशनेन सह प्रथमतः परममूलभूतानामुपनिषदां विशिष्टाद्वैतसिद्धान्तानुसारिभाष्यभूषितानां मुद्रणमुपक्रम्य श्री उ. वे. **सिद्धान्तप्रचारचक्रवर्ति** - कू- **श्रीरङ्गरामानुजचक्रवर्तिस्वामिनां** द्रविणेन प्रथमसरं प्रकाश्य, तेषामन्येषां च साहाय्येन द्वितीयमप्याविष्कृत्य, तावदेवैतन्मुद्रणप्रकाशनार्थकल्पितया **विशिष्टाद्वैतभाष्यप्रचारसमित्या** सुबहुबद्धश्रद्धया समुत्साहितः तृतीयमपि सरं प्रकटीकृत्य, तत्समित्यध्यक्षाणां सुगृहीतनामधेयानां श्री उ. वे. **वी. वी. श्रीनिवास अय्यङ्गार्महाशयाना**माशयमवतंसितवतां तत्समितिकार्यनिर्वाहाध्यक्षाणां वेदभाष्यविदां विख्यातानां श्री उ. वे कुम्भघोणराजकीयकलाशालाभूतपूर्वाध्यक्षाणां Principal **पाट्टाचार्य**महोदयानां तथा कार्यदर्शिनां उ. वे. राव्बहदूर् (गूडलूर्) **जि-रङ्गस्वामि-अय्यङ्गार् महाशयानां** तीव्रतमेनोद्यमेन प्रोत्साहितानां **तिरुमलै तिरुपति श्रीवेङ्कटेश्वरदेवस्थानसमिति-तन्मूलकार्यनिर्वाहधुरन्धर** (Srī Annā Rao) **महाशय**-तदीयप्राच्यविद्याविमर्शालयप्रधानाध्यक्ष (Srī P. V. Rāmānujaswāmi) **महाशयप्रभृतीनां** परिपूर्णेन आदरणेन तदीये एव मुद्रणालये तद्द्रविणव्ययेनैव तद्विमर्शालयकार्यात्मनैव सभाष्यं छान्दोग्यं बृहदारण्यकमवशिष्टोपनिषद्भाष्यजातञ्चेति त्रीन् संपुटान् अमुद्रयम्। एवमुपनिषन्मुद्रणमुद्दिष्टं तावत् तैरेव सर्वैरित्थं मां पुरस्कृत्य

निरवर्णीनि सत्यमहं नित्यमेषु नितरां कृतज्ञोऽस्मि । एवमेतान् सर्वान् दूरीकृत्य अल्पशक्तिमानमेव मां निमित्तमात्रं परिकल्प्य सर्वमिदं सज्जनश्लाघनीयं निर्वर्तितवतः, सर्वदैवतस्य, सर्वथैव नः कुलदैवतस्य श्रीमतो वेंकटेशस्य वैभवमीषदप्यनुपवर्ण्य अवस्थानमसाम्प्रतं पश्यता सर्वमहाजनमाननीयया सरण्या तत्र कृतज्ञतामाविश्चिकीर्षता संप्रति इदमेव मया प्राप्तरूपं परिशील्यते, यत् अस्यैव श्रीनिवासस्य औपनिषदपुरुषस्य अशेषप्रकृतोपनिषदुपदिष्टभक्तिमार्गप्रदर्शितगुणमहिमप्रकारसंग्रहणेन **वेदान्तपुष्पाञ्जलि-**समर्पणेन समर्चनं नाम । तदिदं युक्तरूपमनुमत्यानुवाचयन्तः स्वयमपि पुष्पाञ्जलिप्रदानेन पूजितवन्तो भविष्यन्तीति मे विस्रम्भः । इदमेव ह्यस्माभिरनवरतमाशास्यते, यदस्य भगवतो वेंकटेशस्य श्रीनिवासस्य सार्वभौमं गुणगणोपश्लोकनं नाम । तदेवं सर्ववेदान्तसारसंग्रहसरणिः संप्रति भूमिकायां दर्शयितव्या धारणार्हया रीत्या दर्शिता भवतीति स्थाने विज्ञापनम्, यदयं **वेदान्तपुष्पाञ्जलि**राविर्भाव्यते स्रग्धराश्लोकमय एवम्...........

नत्वा श्रीरङ्गरामानुजनिगमशिरोलक्ष्मणाख्यौ मुनीन्द्रौ
श्रीमन्तौ रङ्गरामानुजमुनितिलकौ श्रीमदाचार्यरत्नम् ।
त्रय्यन्ताचार्यसंज्ञं यतिपतिमभवल्लक्ष्मणार्यं श्रियञ्च
श्रीशैलोत्तुङ्गशृङ्गस्थिरशुभविभवं श्रीनिवासं प्रपद्ये ॥ १

श्रीभाष्ये भक्तिमादावभिलषति गुरुर्ब्रह्मणि श्रीनिवासे
श्रुत्यन्ताचार्यघुष्टः श्रुतिनिकरशिरश्शेखरः श्रीनिवासः ।
स्वामी श्रीरङ्गरामानुजमुनिरतसीगुच्छसच्छायमेनं
शृङ्गारश्चाञ्जनाद्रेरनमदुपनिषद्भाष्यमारिप्समानः ॥ २

भक्तिन्यासप्रभिन्ना भगवति कमलावल्लभे काङ्क्षितार्थे
विद्याः श्रुत्यादिसिद्धाः विविधतनुगुणस्थानक्लृप्तव्यवस्थाः ।
तत्र श्रुत्यन्तदृष्टाः परमिह गुरुभिः प्रेक्षितोऽहं यतिष्ये
सारोद्धारेण गृह्णन् रचयितुमुचितं श्रीनिधेः स्तोत्रमस्य ॥ ३

भक्तिर्मुक्त्यर्थविद्या स्मृतिविदिदृशिनिध्यानमुख्याभिधाना
लक्ष्मीकान्तैकताना बहुविधचिदचिद्गोचरत्वेऽपि सर्वा ।

नामोद्गीथादिविद्याप्रभृतिनि विविधे वेदने क्वापि काम्ये
भाति ब्रह्म स्वतन्त्रे परवति च गुणाद्युज्झितं तद्युतं वा ॥ ४

ब्रह्म श्रीवासमेकं प्रथममुपनिषत्सूक्तिभिः सर्वहेतुं
व्याख्याय व्यासयोगी व्यभजत बहुधा भक्तिमस्मिन् तृतीये ।
शास्त्रस्तोमाभियुक्तैः शितशुभमतिभिः संप्रदायैकवेद्ये
का नस्तद्भक्तिमार्गे मतिरिह तदपि स्वादु यावत्तु लभ्यम् ॥ ५

श्रीमत्त्रय्यन्तसूरिग्रथितनिरुपमस्रग्धरास्रग्धराणां
पुंसां तत्पुण्यगन्धग्रहणपरवतां कीदृगस्मिन् रुचिः स्यात् ।
इत्थं सम्यग् विदन्नप्यनघगुरुवरास्पृष्टपद्धत्यदृष्ट्या
तद्ग्रन्थाभ्यासनिर्यत्पदघटनपरस्त्वेष किञ्चित् करोमि ॥ ६

## ईशावास्योपनिषत्

ईशा श्रीश ! त्वयेदं निखिलमपि जगद् वास्यतेऽन्तः स्थिते त्व-
य्येवं भोग्ये हतात्मा भ्रमति बत बहिर्मात्रगृध्नुर्जनोऽयम् ।
व्याप्तं शुद्धं सुकर्मा नियमितकरणस्त्वामुपास्योक्तमन्त्रो
दिव्यत्वद्रूपदर्शी गतशुगकलुषस्त्वत्पदे त्वां नमस्येत् ॥ ७

गीतासु ज्ञानयज्ञस्त्वयि खलु नवमेऽगीयतैकत्वयुक्ते
कत्वादिव्यष्टिलोकात्मनि निखिलसमष्ट्यात्मके व्याप्तबीजे ।
एवंरूपेण वेद्यः स वृषगिरिपते ! वर्ण्यसे वासुदेवः
त्रैविद्यैः क्षुद्रकामैरिव भवविमुखैः संहितान्तेऽत्र सेव्यः ॥ ८

## केनोपनिषत्

वश्यश्चेद् ब्रह्मगिर्याह्वयकरणगणः स्यात् परिच्छेदयोग्यं
कृत्स्नं ब्रह्मेति मत्या श्रुतिनिकरनुतेष्वेष्ववीशानुयोगे ।

प्रत्येकाधीशदूरो भवसि यदपरिच्छेद्यभूमा ततस्त्व-
 त्याह श्रीकान्त ! तत्तत्करणयमयितृत्वाधिगत्यैव मुक्तिम् ॥ ९

( ब्रह्मगिरिरिति केनोपनिषदुपक्रमदर्शितस्य प्राणमनःप्रभृतिकरण-
 पञ्चकस्य नामेति ऐतरेयादधिगन्तव्यम् )

यक्षं क्लृप्ताग्निवायुप्रभृतिपरिभवं यन्महेन्द्रोऽप्युमातो
 बुद्ध्वा ब्रह्मामरेभ्यो विजयदमवदत् पञ्चकं तं श्रुतीड्ढे ।
प्राणादौ प्राणनाद्यावहमपि च परिच्छित्तिदूरं वनं त्वां
 ध्यायन्तोऽनन्तलोके तव हतदुरिताः श्रीनिवासामृताः स्युः ॥ १०

## कठोपनिषत्

शिष्यस्थैर्यं सतत्त्वाधिगममपि वशीकारवर्त्माप्टथक्त्वं
 सर्वस्योपासकाप्यं फलमतिशयितं योगदृष्ट्योत्क्रमञ्च ।
षड् वल्ल्योऽध्याययुग्मेऽभिदधति कठगाः तत्पितुः सौमनस्यं
 श्रीशाग्निं नाचिकेतं त्वयि स दृढमतिर्मुक्तिविद्याञ्च वव्रे ॥ ११

चित्वाऽग्निं नाचिकेतं प्रशमितकलुषो ब्रह्मजज्ञात्मभूतं
 मत्वा त्वां मुक्तिमेतीत्यधिगमितमतिः श्रीश ! पप्रच्छ मृत्युम् ।
मुक्तः सत्तात्मको निर्विकृतिरिति वदन्त्यन्यथाऽन्ये च तत् त्वं
 तत्त्वं ब्रूहीति तस्मात् त्रय इह कथिताः गन्तृगम्यौ गतिश्च ॥ १२

सत्यं स्याद् ब्रह्मजो ज्ञस्तदपि च जडवज्जायते; हर्षशोकौ
 न स्तो मुक्ते विकारौ स बहुसहजधीमोदभृत् श्रीश ! यस्मात् ।
पारं विष्णोः पदं ते कलितरथिरथाश्वादिक्लृप्तिः प्रपन्नो
 ब्रह्मस्थो ग्रन्थिभेदी भजति स विरजाः स्वात्मनि त्वामुपास्य ॥ १३

सर्वाम्नायाभिनन्द्यः समफलदमहातारमेयोऽन्तरात्मा
 व्यापी त्वं वत्सलोऽत्ता श्रितरम ! पुरुषो विष्णुरङ्गुष्ठमात्रः ।
साक्षात् स्वाप्तार्थकर्ता परिणमितजगद्बीज उक्तो विधाता
 कामानां सर्वभाक्त्वप्रभ इह जगतः कम्पनोऽत्रैव वेद्यः ॥ १४

## प्रश्नोपनिषत्

हेतुं जातौ प्रजानां श्रितरम ! परतां प्राणवायोः तद्वद्धिं
त्वाञ्च स्वापे प्रतिष्ठां प्रणवफलभिदां षोडशाऽऽप्तं कलाश्च ।
षट् प्रश्ने पिप्पलादोऽवददिति तव सप्राणभूताक्षजीव-
स्थस्य ध्यानं त्रिमात्रप्रणवकरणकं सिध्यति त्वत्पदाप्त्यै ॥ १५

इष्टाद्यैश्चन्द्रलोके नरपितृदिविषद्यात्रिमार्गेण भोगान्
दिव्यान् आत्मावगत्या दिनपथविहितादित्यगत्या च मुक्तिम् ।
एते जीवा लभन्तामिति सहकरणांस्तान् पतिस्त्वं प्रजानां
आत्मा संयोज्य भूतैर्जनयसि बहुधेत्युक्तमाद्ये रमेश ! ॥ १६

मुख्यप्राणोऽक्षवर्गोऽप्युपकरणमिहाऽऽकाशमुख्योपक्लृप्ते
देहे वागादयः प्राक् विधरणनिपुणं प्राणमेवाधिजग्मुः ।
त्वत्तः प्राणस्य जन्म श्रितरम ! तनुसंप्राप्तिमध्यक्षभावं
व्याप्तिञ्चाध्यात्ममेवं बहिरपि विदुषः स्यादहीनप्रजत्वम् ॥ १७

तारं मत्वैकमात्रं भुवि महिततपोब्रह्मचर्यादिसंपत्
श्रीमन् ! अस्मात् द्विमात्रात् शशिपदग उपैत्यन्तरिक्षे विभूतिम् ।
विज्ञानात्मप्रतिष्ठां परपुरुषमभिध्याय तु त्वां त्रिमात्रात्
धूताघः प्राप्तशान्तामृतभवदनघस्थानसार्वज्ञ्यभोगः ॥ १८

प्राणः श्रद्धा खमापो मरुदनल इला वीर्यमन्नं मनोऽक्षं
लोको नामात्र मन्त्रस्तप इतरकृतिः षोडशैताः कलाः स्युः ।
जीवस्तद्वान्; न तु त्वम्; त्वदयनमखिलं सिन्धुमज्जन्नदीवत्
तुभ्यं त्वद्रूपमाप्नोत्यहिवरमहिभृद्देव ! वेद्यः परस्त्वम् ॥ १९

## मुण्डकोपनिषत्

वाजिप्रोक्ताक्षरं त्वां श्रितरम ! कथयन् मुण्डकं भूतयोनिं
कर्तारं रुक्मवर्णं प्रणवधनुरवष्टम्भकॢप्तात्मबाणः ।

सप्ताऽऽप्तः साधनानि स्थिरजयमतिराध्याय संलक्ष्य लक्ष्यं
विद्ध्वा लब्ध्वार्चिरादिर्दिवि तव परमं साम्यमेतीति वक्ति ॥ २०

श्लिष्टोपादानभावां श्रितरम ! वदति स्रष्टृतां क्षुद्रलोक -
क्लिष्टक्षेमेच्छुसम्यक्छ्रुतपुरुषमुदेकार्थकर्मैज्यतां ते ।
देवादिव्यष्टिसृष्टिं दिव इह हृदुपासत्तिमाध्येयतार्थां
त्वद्द्रष्टुर्वैभवं त्वत्पदमुवि समतां मुण्डके खण्डषट्कम् ॥ २१

## माण्डूक्योपनिषत्

आत्मा तावच्चतुष्पात् स्फुटबहिरनुभूः सुप्तिसुष्वापमोक्ष-
स्थानो (मुग्ध्युत्क्रमौ चा) मृत्युर्लयश्चाप्यमतिसमतया भव्यसुस्वापकोटी ।
श्रीमन् ! वैश्वानरस्त्वं श्रुतिभिरभिहितो विश्वरूपोऽनिरुद्धः
प्राज्ञोऽपि त्वं सुषुप्त्याद्युपकृदविकला चात्मता ब्रह्मणस्ते ॥ २२

ओङ्कारो ब्रह्मवाची स्फुटमिह कथिता ब्रह्मता ब्रह्मवाक्त्वात्
तस्मात् आत्मा चतुष्पादिति भवति भवेत् तारसाम्यं तदर्थे ।
विश्वं त्वां तैजसञ्च श्रितरम ! वदति प्राज्ञमेवं तुरीयम्
व्यूहात्मत्वेन वृत्तीश्चिति दधतमहिर्बुध्न्यवत् श्रीशुकोऽपि ॥ २३

जाग्रत्त्वाद्याश्चतस्रोऽप्यकथिषत तथा तारमात्राः शिखायाम्
ब्रह्मा विष्णुश्च रुद्रः पुरुष इति मताः देवताः श्रीनिवास ।
नाभेर्जातोऽनिरुद्धं निखिलजनमतिप्रेरकं त्वां प्रपन्नो
रुद्रः संकर्षणं त्वां तमसि सृजिकरो यः स चित्ताभिमानी ॥ २४

जीवद्वारं सुबालोपनिषदिव बहिःप्रज्ञताद्यं तुरीये
मुक्तार्थे नित्यरूपे त्वयि विघटयति श्रीश ! माण्डूक्यवाक्यम् ।
प्रज्ञाप्रज्ञौ च ( मृत्यु प्रलय ) मुग्ध्युत्क्रमणवितरणौ व्यूहमूर्तित्रयी प्राक्
उक्ताऽनुक्तेषु सर्वेश्वर इति वचनैर्लोककार्यप्रवृत्ता ॥ २५

आदेर्ब्रह्मादिलोकः फलमिति शिरसि, ह्रस्वमुख्यस्य चान्यत्
प्रश्ने, वैश्वानरादिं विदुष इममकारादिवर्णं त्विदं स्यात् ।
आदित्वज्ञानसंतत्यखिलमितिमुखं श्रीश ! तुर्यात्मलाभो
मात्रातीतैकनादप्रणवपरपरध्यानधन्यस्य च स्यात् ॥ २६

## तैत्तिरीयोपनिषत्

शिक्षावल्ल्याह काम्याः महितरम ! महासंहिताः पञ्च, तारात्
ब्रह्मप्रावण्यसिद्धिं परत इह फलञ्चान्यदाप्तुञ्च मन्त्रान् ।
वेद त्वां सर्वदेवाङ्गकमिह, कलयेत् यश्चतस्रश्चतुर्धा
भूरादिव्याहृतीः, सोऽमरकृतबलिरित्येवमन्यच्च पथ्यम् ॥ २७

अग्निं वायुं रविं त्वामपि च कलितवान् भूर्भुवःस्वर्महश्चे -
त्यन्तर्हृद्युज्ज्वलाङ्गं त्वमृतवपुषमाध्याय मूर्धन्यनाड्या ।
भित्त्वा शीर्षं प्रतिष्ठामनितरसुलभामग्निवाय्वर्कलोके -
ष्वाप्त्वा स्वाराज्यभाक् त्वामनुभवति महः सूरिवत् श्रीश ! भोग्यम् ॥ २८

सत्यं नित्यप्रबोधं निखिलविधपरिच्छेददूरं विशुद्धं
त्वामानन्दं समस्तेतरभवदभिनिध्यातृवत् ध्यातुकामः ।
हेतुत्वं तेऽन्तरात्मत्वमपि चिदचितां भुक्तिमुक्तिप्रदत्वं
भीकृत्त्वं श्रीश ! बुध्वा मतनिरवधिकानन्दसान्द्रत्वधर्मः ॥ २९

तद्धर्माणं गुहायां श्रितवृषधर ! निध्याय दिव्यस्वरूपं
मुक्तौ सर्वात्मकं त्वामनुभवति सदेत्युक्तमानन्दवल्ल्याम् ।
अन्नप्राणौ परं प्राग् जनिविधृतिकरत्वेन नुत्वा भवद्वत्
तत्तौचित्येन दृष्टिस्तव पृथगखिलान्नायुराप्त्यर्थमुक्ता ॥ ३०

प्रश्नाः श्रीनाथ ! बन्धे गलित इह परं याति लोकं किमाहो
नैवम् , ब्रह्माश्नुते तं गत उत भजते तेन तत्तैकभूयम् ।
भुङ्क्ते ब्रह्मैव किं वा बहुविभवममुं लोकमप्यश्नुते, किं
तन्मात्रं लोकमेतं त्वपि स इति भवत्प्राप्तिवैशद्यवित्त्यै ॥ ३१

लोकं यात्येव तत्रान्नमयमुखसमस्तात्मतां तस्य साक्षात्
पश्यत्यप्राकृताङ्गा दिवि भुवि च चरत्येष सब्रह्मगानः ।
तद् भुङ्क्ते मानुषादेर्मुदमपि भगवद्दत्तद्भोगसाम्यः
स्रष्ट्रा चास्यैक्यशङ्का भयकृदिति रमावास ! भूमा तवोक्तः ॥ ३२

प्राणाद्यब्रह्मभावं द्रढयति भृगुविद्योक्तितश्चान्य( स्य )वल्ली
भूतिद्वन्द्वे न भीतिः क्वचिदिति च विशेषांशमाहापवृक्ते ।
दिव्यश्चान्नादगानं त्वदनुचरणवच्चाह, नानाव्रताद्यैः
युक्ता विद्या भृगोः सा कलयति फलमन्नादतादीति चैवम् ॥ ३३

नाना श्रीनाथ ! नारायण इति विदितेऽनन्तरे प्रश्न उक्ताः
स्नानाहारादिसर्वाचरणसमुचिताः योगिनामाह्निकार्थाः ।
मन्त्रा रुद्रादिकत्वत्पुरुषगणपराः तावकी चापि गाय-
त्र्योऽस्मिन् याच्ञाः फलानां तदपि भवदुपश्लोक आद्यन्तमेषः ॥ ३४

अम्भोधौ लोकमध्ये तदुपरि च तवायोनिजं दिव्यरूपं
गर्भान्तर्हार्दरूपोऽपि च विभववपुः स्वात्मना चाप्तसर्वः ।
इष्टापूर्तादिभर्ता त्वमसि तदमृतं ते त्रिपात् धाम्नि यत्र
श्रीमन् ! तस्मिन् तृतीये त्वमृतमविकलं सूरिभोग्याभिनन्द्यम् ॥ ३५

प्रज्ञाप्य प्राक्, 'य एनं ननु विदुरमृतास्ते भवन्ती' ति, पश्चात्
भूमानं भोग्यतां ते श्रितरम ! समनुस्नानमुख्यैः शुचित्वम् ।
स्वाहान्तान् व्याहृतीद्धान् प्रणवशिखरकं भूर्भुवस्स्वर्मनुञ्च
च्छान्दोग्यस्पष्टगीतां पुर इह दहरोपासनां तां विधत्ते ॥ ३६

विद्यास्वन्यासु देवोऽक्षरमपि पुरुषो ब्रह्म च ज्योतिरात्मा
तत्त्वं विश्वं शिवश्च प्रभुरिति विविधाद्द्वारवृत्त्यैव वेद्यः ।
श्रीमन् नारायण ! त्वं क्वचिदपि विधिरुद्रादिकः शास्त्रदृष्ट्या
सर्वं व्याप्तश्च तद्वद् [illegible] टिन्मेघवर्ष्मा च यत् त्वम् ॥ ३७

ऋग् भानोर्मण्डलं स्य न् यजुरिह पुरुषः साम तन्मण्डलार्चिः
श्रीशाऽऽदित्यान्तरिद्धः कनकमयवपुः सर्वभूताधिपस्त्वम् ।
तत्तद्देवात्मकं त्वां पुरुषममुमनुध्याय संवत्सरात्मन् !
सायुज्यं सार्ष्टिताञ्च श्रयति जन इदन्देवतानां तवापि ॥ ३८

सत्यं पूर्वं तपोऽथो दम इति शम इत्येव दानञ्च धर्मोऽ-
पत्योत्पादोऽग्नयोऽपि क्रमपरिगणितं त्वग्निहोत्रञ्च यज्ञः ।
उत्कृष्टं मानसञ्चारुणिमुखमहितो न्यास एवातिरिक्तः
प्रोक्तः श्रेष्ठोऽप्युपायस्त्वमसि स इति लक्ष्मीश ! विज्ञो रहस्यम् ।

वस्वाप्यो विश्वसृट् त्वं विभुरुपकृतिमान् देवयानं नयेथाः
अभ्यारम्भम्, पथे त्वं वितर दिनकरस्याथ चेन्दोः सयुक्त्वम् ।
उक्त्वैवं त्वामथ स्वम्, 'ब्रह्मणपदमसि ब्रह्मणे त्वर्पये त्वा' -
मित्युक्त्वा मन्त्रतस्त्वां श्रितरम ! शरणीकृत्य भुङ्क्ते तथा त्वाम् ॥ ४०

अग्न्यादौ प्राक् त्वयीत्वाद्युपकलनसमा याजमान्यादिक्लृप्तिः
ब्रह्मास्त्रं चेत्, कृतं स्यात् क्रतुशतमिति तन्नैरपेक्ष्यस्तुतिः स्यात् ।
एवं, 'यो वेद', 'विद्वान्', 'विदुष' इति वचस्स्वर्थभेदो न युक्तः
त्वत्प्राप्तेः प्राक् च किञ्चित् फलमिह गदितुं श्रीश ! सोक्ताऽप्यनूक्ता ॥ ४१

वेदान्ता भक्तियोगं स्फुटमभिदधतो न्यासमन्ते वदन्ति
प्रायः श्रीदेशिकस्तत् स्म, 'य उपनिषदामन्त' इत्याह सारे ।
श्यामादेष प्रपद्ये शबलमिति जगौ सामवेदोऽन्य एवं
'मुक्त्यै सोऽहं प्रपद्ये शरण'मिति तथा 'नायमात्मे'त्यथर्वा ॥ ४२

वाज्युक्तं द्विः, 'क्रतो त्वं स्मर ननु नम इत्युक्ति' मित्येवमूह्यं
तस्मात् त्र्यन्तकोटौ स्फुरसि वृषधराधीश ! धर्मः स्थिरस्त्वम् ।
इत्थं त्वत्प्रोक्तमर्थं युधि पुनरवदः कृष्ण ! गीतान्त एवं
पाणिस्ते भावसारं प्रथयति विनमद्रक्षिणो दक्षिणोऽत्र ॥ ४३

## ऐतरेयोपनिषत्

यत् पञ्चारण्यकेऽस्ति ह्युपनिषदमिधं त्वैतरेये द्वितीयं
तार्तीयीकञ्च तस्मिन् वृषगिरिशिखरोदञ्चनोपास्तयस्ते ।
कर्म प्राक् कर्मखण्डे बहुफलमुदितं तावदास्ताम्, यदेतत्
कर्मब्रह्मात्म संप्रत्यभिधिपदमिदं सत्यमित्युक्तमादौ ॥ ४४

## उक्थविद्या. २–१–३.

सत्रे संवत्सराख्ये विलसति यदुपान्त्येऽहनि, प्राक्प्रसक्तं
निष्केवल्याख्यशालं तदिह, तत इहाप्युक्थमेतद् गृहीत्वा ।
दृष्टिं त्रेधाऽधिदैवं कथयदिह तथाऽध्यात्ममप्याह चाहं
नाथोऽस्म्युक्थं प्रजानां पुरुष इह महानित्युपास्तिं रमेश ! ॥ ४५

भानोरन्तर्बृहन् यः श्रितरम ! भुवनस्यासि मध्ये स एव
प्राणात्मा संनिविष्टः ककुभ इति समारभ्य पूर्वे द्वितीये ।
आदौ प्रोच्येममर्थं विविधगुणफलान्युद्गृणत् ध्यान उक्ते
प्राहाध्याये तृतीये त्वदभिगतिफलञ्चेन्द्र ! भूताधिनाथ ! ॥ ४६

उत्कृष्टं ब्रह्मलोकः पुरुष इति वपुस्तत्र पादाच्छिरोन्तं
विष्टं ब्रह्मात्म शीर्षे श्रिय उदयजुषो वाङ् मनः श्रोत्रमक्षि ।
प्राणश्चेत्यत्र देहोत्थितिकरविभवात् वाङ्मुखस्तव्य उक्थे-
त्याख्यः प्राणो रमेश ! त्वमसि स पुरुषो योऽर्कवत् स्वर्णरूपः ॥ ४७

वाक् तन्तिर्या हि बध्नात्यखिलमपि निजैर्नामभिस्ते विभूतिः
सैवं प्राणादि चैतत्परिचरणपरश्चाग्निवाय्वादि सर्वम् ।
वाक्चक्षुश्श्रोत्रचित्तान्वित इह कथितो ब्रह्म गिर्याख्यया च
प्राणोऽकारार्थभूतत्वदुपगतमहंशब्दमाहाञ्जनेश ! ॥ ४८

विश्वामित्रेण चेन्द्रस्त्रिरुपगतवक्ता कस्त्वमित्याह पृष्टः
प्राणोऽहं प्राणरूपं निखिलमपि रविश्चाहमित्यञ्जनेश ! ।

तद् योऽसौ सोऽहमेवं तपनपुरुषयोस्त्वद्वयतीहारकर्तुः
या प्रज्ञा देवता या यदमृतमपि यद् ब्रह्म तत्तन्मयत्वम् ॥ ४९

उक्थेऽस्मिन् पाञ्चविध्यं वहु ननु बृहतीछन्दसां यत् सहस्रं
संपन्नं पूरुषायुर्दिनसमगणनाऽप्यक्षराणामिहोक्ता।
श्रीमन्! इत्थं वहूक्त्वा त्वथ पुनरुदयेऽप्यत्र मुक्त निषिद्धा
बीभत्सा यत् स न स्त्री पुरुष उपगतो धूतपाप्मा पदं ते ॥ ५०

निष्कामान् काममारं कमपि रथमधिष्ठाय ते प्राप्तिहेतुं
वाग्धुर्द्धिं श्रोत्रचक्रं महितरम! मनस्सारथिं नेत्रवाहम् ।
प्राणात्मा बद्धजीवान् कठकथितवशीकारदक्षान् प्रसन्नः
पार्सात्थं पञ्चकस्तुत्युपकलनवतीमुक्थविद्यामुवाच ॥ ५१(२.४—६.)

ऊर्ध्वश्चाथान्तरिक्षं क्षितिरतलमुखश्चेति लोकान् अथैत-
त्पालान् अक्षाधिपाख्यान् श्रितरम! विदधत् साशनायां पिपासाम् ।
अक्षाणीशांश्च सृष्टे पुरुष इह निवेश्यान्नमेषाञ्च सृष्ट्वा
तत्तच्छक्त्यर्पणाय स्वयमिह पुरुषे व्याप्त इन्द्रस्त्वमात्मा ॥ ५२

गर्भाधाने, प्रसूतेरुपरि च, मरणञ्चानु, जन्मास्य विद्यात्
गर्भस्थो वामदेवो मुहुरिह निजजन्माऽऽह कारापुरेषु ।
प्रज्ञानं ब्रह्म नेताऽखिलकरणमहाभूतविध्यादिदेव–
क्षुद्राक्षुद्रान्तरात्मा त्वमिति वित् अमृतस्ते पदे श्रीश! पूर्णः ॥ ५३

तार्तीयीके च तिर्त्तिर्यभिहितसदृशः संहितोपास्तिभेदः
काम्यः प्रोक्तोऽक्षरोपासनमपि विविधं तत्र वेद्यः कचित् त्वम् ।
देहश्छन्दोऽथ वेदस्त्रय इह पुरुषास्त्वं महापुरुषश्च
श्रीमान् आदित्यवर्ती सकलजनलयोत्पादकर्ता यदुक्ताः॥ ५४ (३.२ ४.

प्रज्ञात्मा दैहिकात्मन्यकथि रस इति श्रीश! तस्यैक्यचिन्ताम्
आदित्यान्तःस्थितेन प्रथयति ; मरणासत्तिलिङ्गं बहूक्तम् ।

तद् बुध्वा मोक्षमन्त्रान् जपतु स कथितान् कर्म चोक्तं विदध्यात्
द्रष्टारं त्वमादृष्टे निखिलगतममुं स्वस्य चात्मेति विद्यात् ॥ ५५

## छान्दोग्योपनिषत्

छान्दोग्येऽष्टप्रपाठे प्रथमत उदितौङ्कार उद्गीथभागे
प्राणादित्यादिदृष्टिस्तदनु विभजनात् पञ्चधा सप्तधा च ।
द्वैतीयीके प्रपाठे दृशिरपि विविधा साम्न्यथ ब्रह्मसंस्थः
धर्मस्कन्धत्रयस्थस्तव पदममृतः श्रीश ! यातीत्यवाचि ॥ ५६

नानाध्यात्माधिदैवप्रकटितदृशिकर्वसामगेयो ह्युदाख्योऽ
स्यक्ष्यादित्यान्तरिद्धो हरिरत उदितोद्गीथतोद्गातृता च ।
श्रीमन् ! आदित्यविद्याद्यधिगमित ! तथोद्गीथ आकाशनाम्ना
प्रस्तावे प्राणनाम्ना लससि तदिदमप्युक्तमाद्यप्रपाठे ॥ ५७

गम्भीराम्भस्समुत्थं जलभरितमहानालमकांशुफुल्लं
रक्तं यत् पुण्डरीकं तदुपमनयनोऽस्यानखान्तात् सुवर्णः ।
उन्नामा पूरुषो यं श्रितरम ! विदुषां सर्वपाप्मोद्गतिः ( क्रमः ) स्यात्
तस्यार्कस्थस्य मत्या फलमुपरि जयत्यक्षिगस्य त्वधस्तात् ॥ ५८

उक्त्वा साम्नो गतिं प्राक् स्वरमिह च जगौ प्राणमन्नं तथाऽपः
स्वर्गं दाल्भ्यः क्रमस्थां गतिमिह शिलको भूमिमन्ते परस्त्वाम् ।
आकाशं सर्वभूतोद्भवविलयकरं जैबलिः प्राप्यकाष्ठां
श्रीशोद्गीथो वरिष्ठस्त्वमयमिति विदो जीवनं स्याद् वरिष्ठम् ॥ ५९

प्रस्तोतुद्गीथकारप्रतिहरणकरान् एत्य यज्ञे ह्युषस्तिः
प्राणाश्चादित्यमन्नं क्रमत इह जगौ देवतां वेदनीयाम् ।
स प्राणः सर्वभूतप्रभवविलयकृत् वेङ्कटेशासि वेद्य
प्रस्तावे भक्तिभेदे फलमिह तु भवेद् वीर्यवत्त्वातिरेकः ॥ ६०

प्रागादौ दिश्यथोर्ध्वं प्रततरविकराकृष्टपञ्चामृताढ्यं
  तिर्यग्वंशे द्युलोकात्मनि मधु विलसत्यन्तरिक्षे त्वपूपे ।
मन्त्रैः ऋग्वेदपुष्पस्थितरसवदबुद्धावितः कीर्तिमुख्यो
  ह्यग्निः प्राग्रश्मिनाड्या रस इह विततो रोहितं रूपमस्य ॥ ६१

एवं शुक्लं यजुर्भ्यो यजुरधिगमितः सामतः कृष्णरूपं
  सारोऽथर्वाङ्गिरोभिर्विहित इह परः कृष्णरूपं पुराणात् ।
गुह्यादेशैश्च, मध्ये तरलमिव यदस्त्येष स ब्रह्मपुष्पात्
  यत् तत् वस्वादयोऽग्निप्रमुखमुखयुता भुञ्जते रोहिताद्यम् ॥ ६२

उद्यन् अस्तञ्च गच्छन् य इह मधु भवत्येष आदित्यः एष
  त्यक्त्वावस्थांऽथ भायात् निरुदयविलयश्चैनमादित्यमेवम् ।
श्रीमन्! देवादयोऽपि श्रितवृषशिखर! त्वन्मयं भावयन्तो
  वस्वादिस्थानभाजो विलयविरहितां यान्ति मुक्तिं क्रमेण ॥ ६३

व्याप्त्या भूत्यैर्मनोवद्ध्युपधिपरिमितः पूर्ण एवाप्रवर्ती
  गायत्रीवत् चतुष्पात् त्वमसि मतिपदं श्रीनिधे! षड्विधश्च ।
भूतं पृथ्वी शरीरं हृदिति चरणभाक् गानसंत्राणकारी
  भूतप्राणप्रतिष्ठा तदिह निगदितो नातिवर्त्यश्च ताभ्याम् ॥ ६४

मुक्त्यर्थाया अमुष्या गुण इति विहिता पञ्चहृच्छिद्रनेतृ-
  स्वर्द्वाराभिमतपुरुषमतिः इमामाश्रिता दृष्टयोऽन्याः ।
एवं ज्योतिष्युक्ते वृषशिखरिपते! द्युस्थितज्योतिरात्म-
  त्वद्रूपे ध्यातदृष्टिश्रुतिरपि लभते कान्तिकीर्त्युज्ज्वलत्वम् ॥ ६५

मानोमयादिधर्मा हृदयपरिमितो ब्रह्म मे ह्यन्तरात्मा
  प्राप्तास्म्येनं परेत्य ध्रुवमिति निपुणाभ्यस्तशाण्डिल्यविद्यः ।
श्रीमन्! स्वात्मनसर्वात्मक! भवति तथा, सत्यसंकल्पतायाः
  सर्वेशत्वादिरिष्टा विततिरिह ततो वर्ण्यसे वाजिभिर्हि ॥ ६६

वायुं त्रैलोक्यकोशे वसु दधति चतुर्दिक्प्रसूवत्सरूपं
द्रष्टुः पुत्रो न नश्येदिति गदितमथ स्वस्य पूर्णायुराप्त्यै ।
पुंविद्या का चिदुक्ताऽऽङ्गिरसमुनिरिमां देवकीपुत्रकृष्णो-
द्देशात् पूर्णायुरन्ते श्रितरम! भवदाप्त्यर्हताहेतुमाह ॥ ६७

वाक्प्राणश्रोत्रचक्षुष्मति मनसि तथा तत्तदीशाग्निमुख्यैः
पादैराकाश इद्धं भवति सह भवद्दृष्टितः कीर्तिमुख्यम् ।
आदित्ये चाण्डभेदोद्भविनि समनुयद्भूतकामोरुघोषैः
त्वद्दृष्टौ वेङ्कटाद्रीश्वर! वदति शुभोद्धोषसौख्योपक्लृप्तिम् ॥ ६८

वागादीनां चतुर्णाम् अन उपलयभूः, वायुरग्न्यादिकानाम्
तत् तौ संवर्गसंज्ञाविति हि दश कृतं स्यात् विराट् सर्वतोऽन्नम् ।
अत्ता चानद्यमानः सकलजनयिताऽऽत्मा हिरण्यस्वदंष्ट्रः
सर्वज्ञो रैक्वविद्या तदखिलदृशिकृत् श्रीश! तेऽन्नस्य भुक्त्यै ॥ ६९

प्रत्येकं ये चतस्रो ननु दधति कलाः श्रीश! ते यत्र पादाः
चत्वारः सप्रकाशायतनसहित सानन्त सज्योतिराख्याः ।
शुश्रूषाराध्यहारिद्रुमतमृषभमद्ग्विग्निहसोपदिष्टाः
सत्कामाः सत्यकामं प्रति तव खलु सा षोडशांशेशविद्या ॥ ७०

क्षित्यग्न्यन्नार्करूपाब्दिगुडु शशिमयौ गार्हपत्यानुहार्यौ
प्राणाकाशद्युविद्युन्मय इतर इति ह्यग्निवित् कोसलस्त्वाम् ।
संयद्वामः कमात्माऽमृतमभयमथो वामनीर्भामनीश्च
प्राणो ब्रह्मेति दध्यौ फणिवरधरग! स्वाक्षिण शिष्टार्चिरादिः ॥ ७१

आदिश्यामानवान्तां गतिमघहरणीं मानवावर्तनस्य
श्रीश! त्वद्भ्रेऽथ यज्ञे ददति फलनिदां मानवावृत्तिहेतुम् ।
होत्राद्युच्चार्यवागाद्युपशमनतरतब्रह्मनामर्त्विगुक्त-
व्याहृत्याश्लिष्टहोमैर्विघटितघटनं वर्णयामास वेदः ॥ ७२

प्रध्वंसिक्षुद्रभूतात्मकजनिदमहापातकादेः प्रभीतः
कृत्वेष्टापूर्तदत्तान्यविगतपितृयाणाख्यधूमादिमार्गैः ।
श्रद्धात्मा चन्द्रमास्तः परिगतसमिदाद्यङ्ग आदित्यमुख्यैः
स्वर्गाख्येऽग्नौ हुतोऽस्मिन् अमृतरुचिरथो व्योमवाय्वभ्रलग्नः ॥ ७३

आत्मा पर्जन्यपृथ्वीपुरुषयुवतिषु श्रीश ! वर्षान्नरेतो-
गर्भाकारो हुतोऽग्निष्वधिगतसमिदाद्यङ्गकेषु त्वदीयः ।
तत्तत्कर्मानुरूप भजति पुरुषतां भूतसूक्ष्मैरितीत्थं
पञ्चाग्निज्ञा लभन्ते स्वमथ तव पदं दुष्टसङ्गेऽप्यदुष्टाः ॥ ७४

पञ्च प्राचीनशालादय ऋषय इतोद्दालकाः केकयाख्यात्
स्वर्मूर्धाऽऽदित्यचक्षुर्धरणिचरणकोऽब्वस्तिराकाशमध्यः ।
वायुप्राणश्च वैश्वानरपुरुष इति ब्रह्म पूर्णं विदित्वा
प्रोक्ताज्ञापूर्वनामप्रतिकलनविधौ कञ्चिदिष्ट्वा प्रकारम् ॥ ७५

बुध्वा प्रादेशमात्रामिह विहितविधां स्वस्य मूर्धादि मूर्धा-
द्यस्येत्यध्याय होमोपकरणधिषणां स्वोरआदौ प्रकल्प्य ।
कृत्वा प्राणाग्निहोत्रं सकलहितवहं त्वय्युदर्याग्निरूपे
श्रीमन् ! वैश्वानरात्मन्यपहतदुरिताः भुञ्जतेऽन्नं भवन्तम् ॥ ७६

आदेशत्वान्निमित्तं किमपि जगदुपादानताश्चैतदैक्यं
कुम्भाद्यारम्भिमृद्वत् सदिति तदसृजत् स्वात् तु तेजः पयोऽन्नम् ।
कृत्वैकैकं त्रिवृत् तत् स्थिरचरमभवज्जीवयुक्तं प्रविश्य
व्यष्टौ द्रष्टुं त्रिवृत्त्वं सुशकमिति चतुःखण्डवाक्यैर्न्यरूपि ॥ ७७

यद्वद् देहस्तथा स्यात् करणमपि मनोऽन्नेन वाक् तेजसैवं
पोष्यस्तोयेन चानो दधिजमिव घृतं सूक्ष्ममेतज्जमत्र ।
सुज्ञानश्चोपवासादिदमथ सलिलेऽन्नस्य तस्याप्ययोऽग्नौ
ज्ञेयो द्रष्टा सुषुप्तौ क्षुधि तृषि मरणे चापि चित्ताद्यपीतिम् ॥ ७८

स्वापे स्वस्मिन् लये यन्मनस उपलयोऽस्त्वन्नमये प्राण इत्थं
मृत्यां प्राणः सचित्तो भजति लयविधां तेजसीदं परस्याम् ।
चिन्त्योदन्या च तेजो ह्युदकविलयकृत् स्यात् तथाऽपोऽशनाया
कामं वाक् चित्तगा स्यात् तदपि लयविधा पूर्ववत् क्रमा स्यात् ॥ ७९

इत्थं सर्वस्य तेजःप्रभृतिविकृतितां चेतनानाञ्च भेदं
स्पष्टं प्रोच्याष्टमान्तैरवददथ परैरष्टभिश्चैतमर्थान् ।
स्वापादौ जीवभेदो भवति मधुरसन्यायतः सिन्धुवार्धि-
न्यायाज्जीवेशभेदः चिति मृतिवचन त्वस्तु गौणं प्रह्राणात् ॥ ८०

न्यग्रोधन्यायरक्ष्या जनिरतिमहतोऽणिष्ठतस्तत् सदेवा-
दृश्यं स्यात् तोयलीनं लवणमिव, गुरौ मोचयत्यस्तु दृश्यम् ।
अस्याप्यासृत्युपक्रान्त्युचितलयदशं बन्धुतापादिबन्धः
निष्कर्माणं नु ततः परशुरिव भवो बाधते नैव मुक्तम् ॥ ८१

एवं दृष्टान्तभूम्ना दृढमविगमितः श्वेतकेतुः स्वपित्रा
सद्विद्यां यामवासो वृषशिखरिपते ! तत्र चिन्त्यस्त्वमित्थम् ।
सूक्ष्मोऽथ स्थूलभूतो निरवधिविलसत्सत्यभावोऽन्तरात्मा
स्वान्तर्यामीति, मुक्तश्चरमतनुविमुक्त्यैव संपद्यते त्वाम् ॥ ८२

नामज्ञो नाम्नि वाचीश्वर ! मनसि परिज्ञाय संकल्पचित्त-
ध्यानप्रज्ञाबलान्नाम्बुषु पृथगुदितास्तेजसि ब्रह्मदृष्टीः ।
व्योम्नि स्मृत्याशयोश्च प्रथितलघुपृथक्कामचारप्रकाराः
अक्षीणप्रश्नशोको मुनिरतिवदितु बोधितप्राणितत्त्वः ॥ ८३

कारुण्येनोपदिष्टस्तदनु दशदिशान्तस्स्थमात्मान्तरिद्धं
भूमानन्दञ्च सत्यं यमुदितनिखिलप्राणिपर्यन्तहेतुम् ।
स त्वं सर्वप्रतिष्ठाऽस्यतिवदनमहाभूमिराहारशुद्धि-
ध्येयः सत्कामचारोचितबहुभवनाद्यर्थदः शोकहन्ता ॥ ८४

छायासुप्तप्रसुप्तेष्वघटितविजराशोकतासत्यकामा-
    द्याविर्भावं प्रजापत्युदितमभिलषन् दह्वविद्याधिगन्ता ।
सत्यैर्धूतावताद्यैः सहितमहिपतिक्षोणिभृद्वल्लभैस्तैः
    ध्यायंस्त्वां ब्रह्म सत्यं हृदि दहरतनुं सेतुरूपं महान्तम् ॥ ८५

सारम्यैरम्मदीयप्रभुविमितसुखे ब्रह्मलोके तृतीय-
    द्यु थे वेश्म प्रपन्नः स्फुरितनिजवपुः कामचारान् भजेत ।
इत्थं छान्दोग्यगीतः पुरगतहृदयस्थानसंशोधनेन
    व्यक्तं प्रोक्तोऽसि नारायण इति गगनं तैत्तिरीये विशोकः ॥ ८६

एवं श्रीयाज्ञवल्क्यो जनकनरपतौ प्रश्नदत्तावकाशे
    जाग्रत्त्वेऽर्कादिभास्यं पुरुषमनुवदन् अन्यदा चात्मभास्यम् ।
आत्मावस्थाः प्रबोधं स्वपनमनुपमानन्दभाक्प्राज्ञसङ्गं
    सुष्वापेऽथास्य लोकान्तरविभवमपि प्राज्ञकार्यं मृतत्वे ॥ ८७

बुध्वा मोक्षैकदृष्टिं नृपतिमभिमतस्वात्मयाथात्म्यबोधं
    ब्रह्मानन्दानुभूतिं निजपरमदशामत्र चामुत्र लभ्याम् ।
उक्त्वा त्वां वस्त्वपेक्षैरशनदवसुदानत्वरूपेण भाव्यं
    हृद्याकाशे शयानं दहरमभिदधे निर्भयत्वाय वेद्यम् ॥ ८८

दहत्वच्चिन्तनायामिव नियतगुणाष्टत्वसाम्यात् प्रजाप-
    त्युक्ता जीवात्मविद्या न्यगदि निखिलविद्याङ्गभावेऽपि येह ।
तन्मात्रान्नैवमुक्तिर्न हि दहरमतिः सेति चार्थाद् वदद्भिः
    श्यामाकाशादिमन्त्रैः श्रितरम ! दहराकाश आम्नायसे त्वम् ॥ ८९

## बृहदारण्यकोपनिषत्

श्रीमन् ! 'कं मेऽर्चतेऽभू' दिति मतिजनिलब्धार्कसंज्ञत्वदुत्था-
    प्सारक्षोणिस्थितोऽग्निः क्रतव इह चितस्तार्क्ष्य एष त्वमर्कः ।

यत्सृष्टाशेषजग्धेरदितिरसि स संवत्सरो यस्य चात्मा
    निष्प्राणोच्छूनदेहात् तव स परिणतोऽश्वोऽश्वमेधः स सूर्यः ॥ ९०

अण्डान्तं साशनायो विधिमपि सकलं वेदमुख्यं च कृत्वा
    ह्यत्ता यज्ञाग्र्यकामो व्यभज इह पशून् देवताभ्यस्तमश्वम् ।
तुभ्यं पत्ये प्रजानामिति निखिलमयी देवतैकाऽसि मृत्युः
    यस्त्वेवं वेद मृत्युं जयति भवति तद्देवतास्वेक एषः ॥ ९१

इच्छत्यात्मामृतत्वं क्रतुकृति जपतः श्रीनिवास ! त्वदाप्त्यै
    अभ्यारोहस्य वाञ्छां स्फुटयति पवमानोक्त्युपक्रान्तिकाले ।
उद्गाता सर्वदोषक्षपणपरिबृढप्राणदृष्ट्याऽऽत्मनीदं
    तस्मा आगायतीष्टं स्वकफलमितरस्तोत्रकाले तथाऽन्नम् ॥ ९२

सर्वाहङ्कृत्समष्टिः स्वयमहमभिमत्याश्रयस्तेन मर्त्यः
    देहाहंधीवहानां सृजिकृदहमभिख्यो विधिर्योऽञ्जनेश ! ।
तद्रूपः सृष्टिशब्द्यं त्रसमिह विबुधाख्यां विसृष्टिञ्च तत्तः
    श्लाघ्यं धत्सेऽतिसृष्टिं सनकमुखमिदंवित्तु तुल्योऽतिसृष्ट्या ॥ ९३

मुख्याहन्त्वोऽहमर्थानिति दधदतिसृष्ट्येव संचिन्त्यसेऽहं
    ब्रह्मास्मीत्येव पूर्वो वृजिनदहनकृत् पूरुषो वेङ्कटेश ! ।
आत्मान्यत् प्रागदृष्ट्वा सृजिकृदपि भवेर्निर्विकारोऽपि सर्वैः
    तत्तच्छब्दार्थभावोद्भवकर इह यत् स्थूलसूक्ष्मप्रविष्टः ॥ ९४

श्रीमन् ! आत्मेत्युपास्यं प्रियतममनघं त्वां विनाऽन्यत् किमर्थ्यम् ?
    यस्त्वामन्यं स्वमन्यं कलयति न स वेदैष भृत्यः सुराणाम् ।
भेतव्यं नैव देवास्त्वदनुभवहतिं कुर्युरित्येषु हि त्वं
    चातुर्वर्ण्यं मनुष्येष्विव कलयसि तत् सन्त्यमी धर्मयम्याः ॥ ९५

वेधोरुद्रातिशायि प्रबलमपि फलं तोषिता भीषिता वा
    दद्युर्देवास्तपश्चेदिति मतिरपि न श्रेयसी श्रीनिवास ! ।

आत्मानं त्वामदृष्ट्वा कृतमखिलमपि क्षीयते त्वञ्च नैव
त्वज्ञातः पासि तस्मादभिलषितफलस्त्वामुपासीत लोकम् ॥ ९६

लोकत्वं स्याद् गृहस्थे विधिविहितकरे देवपित्रादितिर्यक्-
पर्यन्तैराश्रितत्वात् त्वयि भवति तथा लोकता पूर्वमुक्ता ।
नूनं जायां प्रजां त्वं धनमथ विदधत् कर्म पञ्चात्मकत्वात्
कृत्स्नोऽभूरादिसृष्टौ कलयति सकलः स्वञ्च कृत्स्नं तथात्वे ॥ ९७

तद्वच्चात्मेति चित्तं धनमिह च परत्वेति चक्षुः श्रवोऽथो
जाया वाक् कर्म कायः श्रितरम ! तनयः प्राण इत्येव पश्येत् ।
इत्थं पञ्चात्मकाध्यात्मिकगण इह चेद् यज्ञपश्वादिपाङ्क्ता-
ध्यासं कुर्वीत पाङ्क्तं निखिलमिदमवाप्नोति चित्तादिमन्ता ॥ ९८

चक्षुः श्रोत्रं मनो वागन इति गदितो योऽत्र सर्वत्र घुष्टो
दृष्टिध्यानोपपत्तिश्रुतिकरणगणस्तत्र चान्त्यत्रिकस्य ।
देवान्ने ये हुतञ्च प्रहुतमिति पयोऽन्नं पशोर्यद् यदन्नं
साकं तैः सप्तशैलेश्वर ! वदति जनिं त्वद्धि सप्तान्नवाक्यम् ॥ ९९

अक्षीणत्वक्रुतत्वं ह्युदित इह विदन् सप्तकेऽभीष्टमन्नं
मोक्षान्तेप्वश्नुतेऽथ त्रिकमपि कथितं चक्षुरादेः परं यत् ।
नानाजातीयकार्यानुगुणविभवतस्तच्च नैकप्रकारैः
तुल्यं विद्वान् अनन्तात्मकमिति लभते श्रीपतेऽनन्तलोकम् ॥ १००

साक्षात् पुत्रात्मना वा स्वकृतफलभुजोऽमुत्र तत्स्वैरचारा-
न्वर्थोक्त्यानन्ददायीत्यवगतविभवः सर्वनिर्बाधरक्ष्यः ।
श्रीमन् ! वाक्चित्तपुत्रोऽप्यन इह महितो निःसपत्नोऽस्य मत्या
निश्शत्रुत्वं तदीशं शशिनमवयतः षोडशित्वं कलाभिः ॥ १०१

उक्तैरन्यैश्च योऽक्षैरमृत इति मतः श्रेष्ठ एतद्विदो यः
स्पर्धेतासौ म्रियेताप्ययमिह विनुतोऽध्यात्ममीड्योऽधिदेवम् ।

अग्न्याद्यैर्वायुरस्तं न गत इति च तत् श्रीनिधे ! नामरूप-
च्छन्नात्मक्षेमकामः कलयतु निभृतः प्राणमायम्य वश्यम् ॥ १०२

ज्येष्ठाच्छ्रेष्ठाद् भवत्यायतनमिह मनो वाग् वसिष्ठा प्रतिष्ठा
चक्षुः श्रोत्रञ्च सम्पत् तनुकरणधृतोऽनात् प्रजातिश्च रेतः ।
अन्नं सर्वं तदन्नं तददनमभितः श्रोत्रियाचान्ततीर्थं
तद्ब्रह्मेति यद्वित्त्यधिगमनफलं ज्यैष्ठ्यवासिष्ठ्यमुख्यम् ॥ १०३

ब्रह्मेत्यावेद्य बाह्यान् बहुविधपुरुषान् श्रीश ! बालाकिनोक्तः
शारीरात्मा चतुर्वा तनुभरणपरः स्वापकृत् दक्षिणेऽक्षिण ।
सव्ये चाक्षिण स्थितश्चेत्यथ लघुफलकब्रह्मदृष्टित्वमेषाम्
उक्त्वैतत्सर्वकर्ता पर इति तु जगत्कर्मकं बोधयंस्त्वाम् ॥ १०४

सुप्तोऽन्यः प्राज्ञजाग्रच्चित इति न महाराजविप्रादिभावः
तस्यैवाऽऽमन्त्रितस्योत्थितिरहिततया स्यात् सुषुप्तिर्दशान्या ।
प्राणस्तद्देवता वा न च स ; न हि शृणोत्येष नामानि नैजा-
न्युत्तिष्ठत्येव पिष्टः पुनरिति न स नास्तीति जीवं विबोध्य ॥ १०५

स्वप्नस्थानात् पुरीतत्युपरतकरणक्लेश आनन्दरूप-
प्राणाकाशाख्ययत्संगमबलत इहास्त्येष निर्याति यस्मात् ।
तद् बालाक्युक्तसत्यादपि महिततया ब्रह्म सत्यस्य सत्यं
काश्योऽस्मै प्राह तु त्वामघहर ! कृतराड्भाव ! कौषीतकीद्ध ! ॥ १०६

जीवान्तःस्थे रमेश ! त्वयि परिकलितं स्तम्भरूपेऽन्नदाम
प्राणं बध्नाति वत्सं नयनपथलसत्सप्तरुद्रादिरक्ष्यम् ।
शीर्षण्यप्राणसप्तस्थलविहृतिपरं स्थापितं शीर्षभूमा-
वित्येवं विद् गतोऽन्नं निखिलमवरुणद्ध्यात्मशत्रूंश्च सप्त ॥ १०७

मूर्तं तेजोमुखं सत् त्यदपि खमनिलस्तेऽस्ति रूपं यदत्रा-
क्ष्यध्यात्मस्थस्य सारः सत इह, तपतो मण्डलं त्वाधिदैव्यः ।

तत्तत्त्यत्सारभूतस्तदुभयपुरुषस्तस्य कौसुम्भमुख्यैः
तुल्यं विद्युन्निभश्रीविलसित! विदुषो रूपमीदृग् भवेच्छ्रीः ॥ १०८

रूपस्यैवं द्विधा श्रीकमन! विभजनात् न त्वमेतावदात्मा
यत् त्वं सत्यस्य सत्यो भवसि बहुविधे रूपवत्त्वात्तु जीवैः ।
सद्रूपभ्वादियुक्तत्यदभिधखमरुत्सारनेत्रादिसत्स्थ-
त्यद्रूपत्वात् परं न; त्वमथ चिदधिकत्वाच्च सत्यस्य सत्यः ॥ १०९

आत्मानात्मस्थदोषप्रतिभटमखिलत्वेऽपि वैशिष्ट्ययोगात्
आर्द्रैधाग्निक्रमं त्वां निजतनुविगलन्नामरूपप्रपञ्चम् ।
चिद्भिर्भूतानुषक्तं स्वयमपि च महद् भूतमाख्याय कश्चित्
मैत्रीयीवामृतत्वं श्रितरम! लभते नित्यसार्वात्म्यदृष्टिः ॥ ११०

वाक् चक्षुः श्रोत्रचित्ते अन इति हृदयव्योम कौक्षेयतेजो
देहो रेतश्च धर्मः स्वर इति च ऋतं मानुषश्चान्यदात्मा ।
एतान्यध्यात्ममन्यक्रमत इह वदत् श्रीश! पञ्चाष्ट चैकं
बाह्यांश्चार्थांस्तदर्थान् उपदिशति मधुब्राह्मणं त्वा तदन्तः ॥ १११

देवाः स्युः प्राणभाजां मधु हितवहनात् ते च तेषां तदेतत
तत्तद्देवे च तत्तन्नियमनविषये चोक्त आध्यात्मिकांशे ।
श्रीमन्! अन्तःस्थितेः स्यादमृत! तव मधु त्वं त्वदीयञ्च रूप
दिव्यं देहान्तरिद्धं पतिरसि च हरिर्मध्विदं सर्वसारः ॥ ११२

अश्विभ्यामुग्रकृद्भ्यां मधु समधिगतं प्राग् दधीचोऽश्ववक्त्रात्
देवादेवान्तरात्मामृतमयपुरुषस्यापि दिव्यं रहस्यम् ।
पक्षी भूत्वा प्रतिप्राण्यनुविशसि भजस्यञ्जसा प्रातिरूप्यं
श्रीमन्! एकोऽप्यनन्तावतरण! हरयोऽनन्त! निर्भास्यनन्ताः ॥ ११३

ब्रह्मिष्ठो याज्ञवल्क्यो यजनकृदनुबन्ध्यश्वलं प्रत्यवादीत्
अध्यात्मञ्चार्तभागं ग्रहमुखगणनां मृत्युकर्मादिकञ्च ।

भुज्युश्चैवाश्वमेधाचरणफलमहालोकम् , एतच्च नेतुः
वायोः शक्तिं वृषाद्रीश्वर! तव विभवं द्वावुषस्तं कहोलम् ॥ ११४

सर्वात्मत्वापरोक्ष्ये न हि मिलत इति ब्रह्मशब्दस्तथोक्तः
कः स्यादित्यत्र स स्यात् सकलयमयिता त्वन्य आर्ताहमर्थात् ।
ध्यानादेः कर्तृभूतादिति मुनिरवदत् श्रीश! सर्वान्तरत्वं
ध्येयं त्वय्येव, नूनं तव भवतु जगद्व्यापितैवापरोक्ष्यम् ॥ ११५

विद्यैषा स्थानरूपादिकमिदमियती पद्धतिर्योग इत्थं
पूर्णासंकीर्णबुद्धिं गुरुवरमुखतः प्राप्य पण्डां प्रवृत्तः ।
ऊहापोहौ वितन्वन् श्रुतिमतिमुखविज्ञातनानार्थराशौ
बालः संशीलयंस्त्वां श्रितरम! कुरुते ध्यानतश्चापरोक्ष्यम् ॥ ११६

अण्डान्तस्तोयवर्ध्यंत्रसमुखवसुधाधारनीरोक्तिपूर्वं
गार्ग्याऽऽधारेऽनुयुक्ते क्रमकथितदशब्रह्मपर्यन्तलोकः ।
अन्याद्दक्षातिदूराखिलदुरधिगमाप्राकृताक्ष-यलोक!
श्रीमन्! अण्डे विरिञ्चोपरि पदविरहात् प्रश्नमाहन् ततोऽस्या ॥ ११७

संदृब्ध यत्र सर्वं जगदगददिदं वायुनामैष सूत्रं
सर्वान्तर्यामिणं त्वां श्रितकमल! तथा पूर्णमुद्दालकाय ।
तेनावेद्यस्तदन्तर्बहिरपि विलसंस्तन्नियन्ता तदज्ञो
योऽन्तर्यामीति तं त्वं चि (त्व) दधिकममृतं नाम विद्धीति भङ्ग्या ॥११८

सर्वान्तर्यामितां ते स्फुटयितुमधिदैवाधिलोकाधिभूता-
ध्यात्मस्थानास्तथाऽन्ये कतिचन कथिताः काण्वमाध्यन्दिनाद्यैः ।
अन्यादृष्टत्वयुक्ता श्रितरम! भवतो द्रष्टृता तादृशान्या-
भावश्चोक्तौ कबन्धः फलमफणदिदम्वेदितुः सर्ववित्त्वम् ॥ ११९

गार्ग्यै प्राहानुपृष्टः श्रितरम! धृतिकृत् त्वण्डमुख्यस्य कार्य-
स्याव्यक्ताकाशमस्याक्षरमपि धृतिकृत् स्वेन संकल्पतस्त्वाम् ।

यत्संकल्पात् प्रवृत्तिं चिदचिदुपगतां लौकिकीं वैदिकीं वा
धत्ते वेद्यं विमुक्त्यै ध्रुवमदृशिपदं द्रष्टृनीदृक्षसर्वम् ॥ १२०

पृष्टः श्रीमन्! विदग्धं त्वविदितपरमत्वत्स्वरूपं बभाषे
विस्तारं देवसंख्यापरिगणनविधौ संग्रहञ्चानुपूर्व्यात् ।
पृष्टो लोकं निगद्याऽऽयतनमपि मनोज्योतिषः पूरुषांस्तान्
निर्दिश्याष्टावपृच्छन् स्वयमपि तदिदन्देवताः सोऽप्युवाच ॥ १२१

तत्रातृप्ते मुनीन्द्रे परिभवितुममुं पीठिकाकृत्यसौ यत्
दिग्देवाधारपृच्छामकृत, स रुचिरं तत् समानान्तमुक्त्वा ।
प्राच्यातृप्तेर्विदग्धं श्रितरम! पुरुषान् अष्ट पूर्वान् निरू(रु)ह्य
प्रत्यू(त्यु)ह्याक्रान्तमन्यं पुरुषमुपनिषद्धोषितं त्वामपृच्छत् ॥ १२२

भग्नो ध्वस्तो विदग्धः, कथमपचरितुं ब्रह्मविद्यन्य इच्छेत्
ब्रह्मिष्ठस्यावधृत्यै त्वयमनुयुयुजे श्रीश! संमान्य विप्रान् ।
सर्वांशैर्वृक्षतुल्ये पुरुष उपगतो मृत्युवृक्णे प्ररोहः
रेतस्तज्जं कथं तज्जनकमिति न तत् स्यात् प्ररोहेऽस्य मूलम् ॥ १२३

नष्टो वृक्षः समूलः क्वचिदिव पुरुषश्चेत् तदा जन्म मा भूत्
धानाजन्मेव वृक्षो भवति जन इति ब्रूत मूलं यदत्र ।
आनन्दं ब्रह्म दातुर्बहुमतमिति तद्वेदिनो रैरितीत्थं
पृष्ट्वा जित्वा त्वदिज्यां प्रति जनकगवीः श्रीधरायं जहार ॥ १२४

पित्राऽऽदिष्टो न युक्तं हरणमननुशिष्येति सम्राजमेत्य
श्रीमन्! आकर्ण्य दृष्टीस्तव तदवगताः भिन्नभिन्नोपदिष्टाः ।
वाचि प्राणेऽक्ष्णि कर्णे मनसि हृदि ततोऽशिक्षयत् ताः स पूर्णं
वागाद्याक्रान्तलोकाखिलवशनफलाः, तन्न मेनेऽनुशिष्टम् ॥ १२५

कूर्चान्नीचैर्गतेऽस्मिन् नतवति जनके याज्ञवल्क्योऽन्वशासत्
'विद्या एता यदर्थाः यदिह गतिवहं तत् समाकर्णनीयम् ।

इन्द्रोऽसौ दक्षिणेऽक्ष्णि प्रविलसति विराडस्य पत्नी च वामे
बुध्यस्वैता'विति त्वां सततसहचरीं श्रीनिधे! ते श्रियञ्च ॥ १२६

सौधे हृत्कर्णिकायां श्रितरम! नयनात् जालकप्रावरान्तः
हृद्यग्रे भोगभाजौ विविधगतिहितानेकनाड्यूर्ध्वनाड्याम् ।
लक्ष्मीञ्च त्वां चरन्तौ तनुधरविसजातीयभोगौ अचिच्चि-
द्वैजात्यात् 'नेति नेनी' त्यवगतिविषयौ प्राह तस्याभयार्थम् ॥ १२७

ज्योतिःप्रश्नेऽन्यदा तत् श्रितरम! कथयन् बुद्धसुप्तान्तभोगा-
वृत्तिं जीवे सुषुप्ते नरमुखविधिपर्यन्तदूरप्रमोदम् ।
संश्लिष्य त्वां निविष्टं हृदि वृषगिरिवत् स्वस्थतां शोकहीनां
मृत्त्वा त्वन्नीतलोकश्रितफलपुनरावर्तनञ्चाभ्यधत्त ॥ १२८

निष्कामस्यत्र चाह त्वदनुभवरसं कर्मविद्योभयस्या-
प्यत्याज्यत्व परेषां भयमिह जननेऽवश्यविज्ञेयतां ते ।
देवैश्वर्यानं तवैव त्वदपृथगुदयेष्वेषु नानात्वबुद्धौ
अन्योपास्तौ च बन्धं श्रितरम! दहरोपासनेऽत्राप्यभीतिम् ॥ १२९

तारं प्रस्तुत्य पूर्वं हृदयमथ दयादान्तिदानैरकत्वात्
श्रीमन्! तादृक्प्रजापत्युपमितम् अपि यन्नामवर्णत्रयस्य ।
विज्ञानञ्चार्थवत् तत् हृदयमवयतो ब्रह्म सत्यं त्वमेवे-
त्याम्नायः प्राह लोकेष्विह जयम्, अपि सत्योक्तिवर्णार्थमाह ॥ १३०

छान्दोग्योक्तप्रकारात् चिदचिदुभययन्तुच्यसे श्रीश! सत्यम्
सौरे ते मण्डलेऽक्षिण्यपि वदति मिथस्संप्रतिष्ठे स्वरूपे ।
तारार्थे भूर्भुवःस्वःपदगमितशिरोबाहुपादोक्तरूप-
द्वन्द्वे त्वेकेन, नाम्नाऽप्यहरहमिति वा ध्यायतस्त्वाञ्च मुक्तिम् ॥ १२१

शाण्डिल्याद्यैरुपास्य! श्रितवृषशिखरिन्! पाप्मनो वि (प्मनस्त्वं) द्यसीति
प्राप्तो विद्युत्समाख्यां विविधदृशिपराभीष्टविश्राणनोऽसि ।

शान्ते वैश्वानराग्नौ क्रमसमुपगतैर्नीयमानस्त्वदीयो
वा-वादित्येन्दुमुख्यैरमृतमयभवल्लोकमाप्नोत्यशोकम् ॥ १३२

विष्टं ह्यन्ने समस्तं जगदथ रमते प्राण इत्यत्र वि स्यात्
अन्ने प्राणोऽपि रं स्यादिति विदितवतस्तद्द्वयस्याप्युपास्तौ ।
सर्वैर्भूतैः प्रवेशो रतिरपि पुरुषे तत्र लक्ष्मीश! किञ्च
च्छन्दोमातुः पदं त्वां क्वचन कथयति श्रीयशोदं तुरीयम् ॥ १३३

गायत्र्येवास्ति जप्या तदवरविभवा स्यात्तु सावित्र्यनुष्टुप्
प्राणान् एषा समस्तान् गयपदगमितान् गायतस्त्रायते यत् ।
त्रींस्त्रीन् अष्टाक्षराणि ह्यभिदधति रमावल्लभ! त्रीणि लोकान्
वेदान् प्राणांश्च यानि, क्रमविहिततदीक्षोऽत्र पादेष्वमुष्याः ॥ १३४

लोकादौ यद्यदेतज्जयति जयकरीं तां तुरीये प्रतिष्ठा-
भाजं पादेऽथ सत्येऽक्षिणि तमपि बले प्राण एतच्च मत्वा ।
सोपस्थानं सहाम्न्याह्वयमुखमनघः स्यात् प्रतिग्राह्यसर्वैः
प्राप्नोति ध्यानतस्ते सवितरपरजास्त्वां रजःपारवर्तिन्! ॥ १३५

त्वद्दृष्ट्यावारकं त्वं श्रितरम! मनसो वारयन् रागबन्धं
रूपं ते सौम्यतेजः शुभतममुपसंदर्श्य सर्वान्तरात्मन्! ।
क्षुद्रं देहाद्युपेक्ष्य प्रणवमित! गतं त्वत्पदाब्जं कृतज्ञ!
क्षिप्ताघः सत्पथेन स्थिरपरिचरणानन्दभाजं विधत्से ॥ १३६

## श्वेताश्वतरोपनिषत्

श्वेताश्वाद्याख्यवेदः श्रितरम! भजनं त्र्यंशकब्रह्मणस्ते
ध्यानैतद्देशसिद्धीक्षणकलनविधाः मुक्तयेऽन्याध्वहानिम् ।
योगान्याद्दश्यतामप्युपधिकृतमिथोभेदहान्याऽणुजीवा-
नन्त्याविर्भावनात् क्रमत इह निरालम्बभाल्ये प्रपत्तिम् ॥ १३७

कालस्त्वामाव्यकर्माद्यखिलपरिकरं श्रीनिधे ! ब्रह्मशब्दं
 विश्वोपादाननायै प्रकृतिपुरुषसंश्लेषणात् त्र्यंशकं त्वाम् ।
तारेणाङ्गुष्ठमात्रं हृदि परपुरुषं सत्त्वदं प्राग् विचिन्त्य
 स्वात्मस्थं वीक्ष्य पाशक्षतिसहितमुरुश्वैश्वर्यभाक् स्यात् प्रपन्नः ॥ १३८

देवात्मन् सत्त्वधामन् ! पुरुष ! चिदचितोरन्तरात्मन् ! महीश !
 प्राह ब्रह्मादिधातर्वरद ! च तमसःपारवर्तिन् ! अनन्त ! ।
तारार्थाऽऽदित्यवर्णाखिलशरण ! सहस्राक्षिशीर्षादिक ! त्वां
 मध्येनीरञ्च मध्येभुवनमिह गिरिलेति सताचलेशम् ॥ १३९

रुद्रेशेशानशब्दाः शिव इति समभिव्याहृतेस्त्वत्परास्ते
 माहैश्वर्यञ्च यद्वत् हर इति तदनीशेति जीवप्रकृत्योः ।
नैवोमेशोक्तिलिङ्गं क्वचिदथ गिरिशन्तेति संबोध्यसे तं
 तन्वन् संहारसर्वेशनकर ! भगवांस्त्वं हि लक्ष्मीश ! भव्य ! ॥ १४०

## अथर्वशिखोपनिषत्

मन्त्रो ध्यानञ्च कर्ता विषय इति चतुर्ष्वेषु बोद्धव्यरीतिं
 पृष्टोऽथर्वा शिखायाम् — प्रणव इह परब्रह्म भाव्यः, चतस्रः ।
मात्राः नानास्तवाह्वाः प्रतिनियतलसन्नामवर्णाश्च, देवाः
 ब्रह्मा विष्णुश्च रुद्रः पुरुष इति वदन् श्रीश ! मेने परं त्वाम् ॥ १४१

ह्रस्वो दीर्घः प्लुतोऽसौ प्लुतयुतमविभज्येयतेऽन्वर्थनामा-
 न्यस्यानेकानि जाग्रत्स्वपनदृढभवत्सुप्तिमोक्षाश्च मात्राः ।
तत्तत्कृद्देवकत्वात् श्रितरम ! , भवतो ध्यानमिष्टं तु विष्णुः
 ध्याता रुद्रो हृदीक्ष्यः शिवकर ! सकलैश्वर्यकृत् कारणं त्वम् ॥ १४२

## अथर्वशिर उपनिषत्

सार्वात्म्यं रुद्रदृष्टं तदनुभवबलात् तस्य देवैः स्तुतिञ्च
 त्वद्वाच्योङ्कारनामान्यभिहितविवृतिं भस्मसंस्पर्शमुख्यम् ।

ईशानान्तर्नियन्तुः श्रितरम ! तव निध्यानमित्थम्विधत्व-
न्माहात्म्यञ्चाप्यधीतेः फलमिह च शिरः सप्तभिः प्राह खण्डैः ॥ १४३

रुद्रो भस्मावृताङ्गो विसदृगनिमिषैर्विस्मितैः को भवानि-
त्युक्तः स्वं साधुवृत्तं गमयितुमगदन्नित्यसर्वात्मतां स्वाम् ।
स स्वस्मादन्तरं त्वामपि बहिरखिलाद् वीक्ष्य लक्ष्मीश ! सोऽहं
सर्वोऽप्यन्योन्यभिन्नोऽहमिति दृढमतिस्तैश्च वेद्यं स्वमाह ॥ १४४

त्वद्रूपस्तत्त्वदृष्ट्या श्रितरम ! विबुधैर्वन्दितोऽसौ ततस्त्वां
तस्यात्मानं विदन् सन् भसितविलसितः शान्तिमत्यन्तमेति ।
तारस्त्वद्ध्यानमन्त्रः, विदधति विधिविष्ण्वीशलोकातिमेत-
न्मात्राः तुर्यार्धमात्रा पुनरिह तनुतेऽनामयत्वत्पदाप्तिम् ॥ १४५

## कौषीतक्युपनिषत्

रागादिष्टं ध्रुवेष्टं किमपि चरितवांश्चित्रवत् चन्द्रमाप्तः
तत्पृष्टोऽथो विसृष्टः प्रतिवचनवशात् प्राच्यविद्याबलेन ।
वृष्ट्याद्यापत्त्यनर्हः स्वयमतिगतवान् अर्चिराद्यध्वशेषं
संकल्पाद् ब्रह्मलोके त्वरमपि विरजां श्रीश ! तीर्त्वाऽऽप्ततिल्यः ॥ १४६

प्रत्युद्यच्चूर्णमालाञ्जनवसनफणानेतृदिव्याप्सरस्त्री-
क्लृप्तालङ्कारदेहः क्रमसमुपनतब्रह्मगन्धादिराढ्यः ।
पर्यङ्के सोऽमितौजस्यतिमहति सुखोपस्तरे त्वां निषण्णं
पश्यन् आरुह्य सत्योत्तर उदितभवत्तुल्यभोगो विभाति ॥ १४७

स्थानेष्वादित्यमुख्येष्विह तव लसतो मूलरूपं स्थिरं तत्
कौषीतक्युक्तभूमन् ! श्रितरम ! महिते मण्टपे भ्राजमानम् ।
आसन्द्यामद्भुतांशोज्ज्वलमृदुमधुरास्तारपर्यङ्कमध्ये
ध्यातुं लक्ष्मीसमेतं त्वरयति परमार्थाय पर्यङ्कविद्या ॥ १४८

इन्द्रस्त्वाष्ट्रादिहन्ताऽप्यनघ उपगतायुष्ट्वयुक्तामृतत्वः
प्राणः, प्रज्ञास्वरूपश्चिदिति निगदितेष्वन्तरात्माऽस्युपास्यः ।
दुर्बाधो ब्रह्महत्यादिभिरिह सुचिरायुश्च तत् स्वर्गलोके
जीवः श्रीशामृतोऽथो भजति निजगुणं सत्यसंकल्पताद्यम् ॥ १४९

काष्ठाप्राप्तं हितत्वं हितहिततरते चात्र ते ध्यान एवं
श्रीमन्! उक्तप्रकारः पतिरसि जगतः पालकश्चेश्वरश्च ।
आनन्दश्चाजरश्चामृत इह सदसत्कर्मसंप्रेरकस्त्वं
सच्चासच्चापि कुर्वन् अविकृतिरथ वाज्युक्तबालाकिविद्या ॥ १५०

## मन्त्रिकोपनिषत्

षड्विंशः सप्तविंशोऽप्यसि निखिलमयो द्वैतमद्वैतमेवं
नानारूपो नियन्ता परिणमयसि गामष्टरूपां चिदर्थम् ।
व्यापी हंसस्त्रिसूत्रः शुचिरणुरविनाश्यप्रपात् त्वं त्रिवर्त्मा
तेजोहन्तेति मन्त्रोपनिषदुदितश्रीः श्रीधराप्येति चित्त् त्वाम् ॥ १५१

## सुबालोपनिषत्

श्रीमंस्त्वत् सर्वजन्म प्रलयमविकृतानन्तभोग्यत्वतस्ते
मुक्तयर्थोपास्यभावं हृदयगमहिमस्वप्ननिद्राप्रबोधान् ।
अक्षान्तर्गोचरान्तः कथयति करणाध्यक्षदेवान्तरन्त-
र्नाड्याः प्राणेऽथ बोधे सुख इह हृदि च ध्यानरीतिं सुबालम् ॥ १५२

षष्ठाद्यैः श्रीश! वक्ति क्रमात इह समस्यापि नारायणत्वम्
तद्धेतुश्चान्तरात्मत्वमपि तव जुगुप्स्येऽत्र देहेऽवतारम् ।
त्वय्यक्षादेरुपास्येऽप्ययममखिलच्युतिं मुक्तिमव्यक्तभेदात्
नैर्याच्यं बालकर्म क्षयिगुणमखिले दाह्यतां शिष्यवृत्तम् ॥ १५३

तृप्तोऽपर्याप्तनित्यामृतमखिलकरो निर्विकारोऽखिलज्ञः
सर्वात्माऽऽनन्दभूमा श्रितरम! तमसस्त्वं परस्तात् स्थितोऽसि ।

तद् विष्णोः सूरिदृश्यं पदमुपलभतेऽव्यक्तपर्यन्तभेदी
नाभिन्नो न द्वितीयः स तव न मृतिमान् नामृतत्वत्समानः ॥ १५४

त्र्यक्षः प्राग् भूतमृत्युस्त्वजनि, निविविशे यत्र भीते स, योऽपि
क्रोधात् रुद्रं ललाटादसृजदमुमपि त्वं विधत्से विरिञ्चम् ।
स्रष्टा साक्षात् समष्टेः श्रितरम ! तमसः पारवर्ती च विष्णुः
दिव्यो देवोऽन्तरात्मा पुरुष इति मितोऽस्यत्र नारायणश्च ॥ १५५

## अग्निरहस्यम्

हृद्यागं ह्यर्चनीये त्वयि नियतमुशन्त्यागमा बाह्ययागात्
भूयोभोग्योपक्लृप्तिप्रगुणितविभवं श्रीनिधे ! भावतुष्टे ।
बाह्यक्रत्वङ्गमुक्त्वेष्टकचितमथ वक्त्येवमग्ने रहस्यं
विद्यारूपाग्निशस्त्राद्यखिलपरिकरं धीक्रतुं तद्विशिष्टम् ॥ १५६

षट्त्रिंशत् स्युः सहस्राण्यधिमहि पुरुषस्यायुषोऽह्नां तदेत-
द्वैशिष्ट्यात् क्लृप्तभेदं भवति गदितसंख्यानचित्याग्निरूपम् ।
चेतो वाक्प्राणचक्षुश्श्रुतिषु किमपि वा कर्म यद्वाऽथवाऽग्निः
तत्रैकैकाग्निसाध्यः श्रितरम ! भवतः प्रीणनो धीक्रतुः स्यात् ॥ १५७

चित्याग्न्यादौ धरित्रीप्रभृतिदृशियुताः सर्वभूताभिसंप-
त्त्याप्त्यै लोकम्पृणायां श्रितरम ! विदधद्ध्यग्निवाय्वादिदृष्टीः ।
दुष्प्रापं दक्षिणावत्क्रतुभिरविदुषा त्वत्पदं विद्यया तत्
त्वारोहन्त्यस्तकामा इति वदति परं ब्राह्मणं त्वत्प्रभावम् ॥ १५८

अन्नं स्याद् मण्डलं तद् वपुरिदमपि तत्रद्गतः पूरुषोऽत्ता
सर्वो भूत्वा च सोऽवत्यखिलमपि भवेत् तत् यथोपासते तम् ।
इत्युक्त्वा त्रीष्टकैकाष्टकविधममृतोऽग्निश्च मृत्युश्च सूर्य-
स्वाक्षिस्थं तं विदंस्त्वामिति महितरम ! ब्राह्मणं पूर्वमाह ॥ १५९

मूर्धादौ ध्यातुरङ्गं कृतमिह चुबुकान्ते तु वैश्वानराङ्गं
सर्वं प्रादेशमाने तदवयवनियता नामक्लृप्तिस्तथाऽन्या ।
भाव्यश्चात्रापमृत्युं जयति च लभते चायुरित्यन्यदेवं
सत्यप्येषा त्वदाप्त्यै श्रितरम ! विहिता साम्नि या सैव विद्या ॥ १६०

वेद्यादित्वं यथोरःप्रभृतिषु हि तथा ध्यातुरङ्घ्र्यादि तेऽङ्घ्र्या-
द्युक्तं प्रादेशमात्रस्तदसि मिततया त्वं द्युमुख्यैः प्रदेशैः ।
इत्थं छान्दोग्यगीतं यजुषि गदितमेतच्च वैकल्पिकं स्यात्
न्यायोऽसौ नामक्लृप्तावपि तदिह रमावास ! विधेयमेका ॥ १६१

श्रीमन् ! अत्थान्नमेवं पृथगिति गदितं ह्यल्पमंशान्तरैश्चा-
युक्तं व्यस्तैकवेदिष्वित इह कथितप्रायमन्नं फलं तत् ।
यत् साम्न्युक्तं समग्रम् विकलभवदनुध्यानदोषापनुत्त्ये-
भङ्गी प्रादेशमात्रागुणफलकथनं वाऽऽयुराप्त्यादिवादः ॥ १६२

एकेनोपास्यमुक्तं यदिह तदितरध्यातमुक्तं परत्र
प्रायो दृष्टः कथांशः श्रुतिषु बहुभिदो दृप्तबालाकिवाग्वत् ।
पूर्णोपास्त्यर्थवादः स इति न भवतु स्वार्थनैर्भर्यमत्र
स्याद् वा तत् कल्पभेदाद् घटितमुपदिश श्रीश ! नस्त्वं त्वदिष्टम् ॥ १६३

कामः कर्मापि गन्धो रस इति सकलाभ्याप्तिपूर्णो ह्यवाक्को
स्यादादर्तव्यहानेरथ तु भविहृदि श्रीश ! सूक्ष्मे निविष्टः ।
आकाशात्मा च भास्वद्वपुरसि धृतिसंकल्पयोः सत्य एवं
प्राणाङ्गस्ताण्डिवाजिस्फुटघटितगुणाकृष्टशाण्डिल्यभोग्यः ॥ १६४

मानोमध्यादिरास्तां हृदयकुहरगस्यास्य दुःसंघटः स्यात्
धर्मोऽयं सर्वकामप्रभृतिरिति रमावास ! शङ्कापनुत्त्यै ।
ज्यायस्त्वाभङ्गतस्ते सुघटितमखिलं प्राप्यरूपं गुणौघं
हार्दत्वेऽप्याह सामश्रुतिरथ सुलभत्वञ्च हृत्संगमोक्त्या ॥ १६५

ताण्डिप्रोक्तैर्गुणैस्त्वां युतमपि च मनोवेगिनं कामरूपं
सर्वाश्चानुप्रभूतं दिश इह मिनुमः सत्यधृत्यात्मकञ्च ।
सर्वं खल्वित्युपासा प्रथममभिहिता साम्नि तत्स्थान उक्ता
सत्यं ब्रह्मेत्युपासा श्रितरम! चिदचित्सर्वयन्तुस्तवात्र ॥ १६६

## महोपनिषत्

ब्रह्मेशानौ निषिध्य प्रलय इतरवत् प्रोच्य नारायणैक-
स्थैर्यं तस्मात् सहाङ्गैरुपजनिमनयोर्वर्णयन्त्यां महत्याम् ।
श्रीमन्! ब्रह्मादिमात्मन्! उपनिषदि कथं देवतापारमार्थ्यं
नेच्छेत् कश्चित् त्वयि; स्यात् सुगममिह परं पाठयाथात्म्यविद्भिः ॥ १६७

## अष्टाक्षरनारायणोपनिषत्

प्राग् व्यष्टेः ब्रह्मरुद्रादि च भवति यतो यस्तदेतत् समस्तं
श्रीमन्! अन्तर्बहिः सन् अनघ! शुभ! तवैतस्य नारायणस्य ।
आदर्शं श्रीमदष्टाक्षरपदमखिलश्लाघ्य (मबहिर्भूत) तारं त्रिसन्ध्यं
जप्त्वा पापात् प्रमुक्ताः प्रणिहितमनसो भुक्तिमुक्ती भजन्ति ॥ १६८

(अथ व्याख्याता इव अव्याख्याता अप्युपनिषदः सन्ति समादृता इतीदं कतिपयोपनिषदर्थसंग्रहेण दिङ्मात्रेण प्रदर्श्यते ।)

## श्रीनृसिंहपूर्वतापनी

क्षीरोदे शेषभोगे शयितमहिपतिक्षोणिभृत्कल्पवृक्ष!
श्रीजुष्टं त्वां नृसिंहं मनसि कलयितुं मन्त्रराजं ब्रवीति ।
कल्याणत्वद्गुणौघप्रकटकममृतत्वादिसर्वार्थहेतुं
शक्तिन्यासाङ्गमन्त्राद्यखिलपरिकरं तापनीयश्रुतिर्नः ॥ १६९

दृष्ट्वाऽऽदौ मन्त्रराजं रविशशिशिखिभिर्नेत्रिणि श्रीनृसिंहे
ध्यात्वा च स्वात्महोमं शकनमधिगतो व्यक्तसृष्टौ विरिञ्चः ।

रुद्रेन्द्रादिस्तथैतन्मनुकृतमहिमेत्याह चाव्यक्तसंज्ञः
श्रुत्यन्तः श्रीश ! तेऽस्य स्मरति मनुमहिर्बुध्न्य एनं महिष्ठम् ॥ १७०

## सीतोपनिषत् श्रीरामोत्तरतापनी च

श्रीभूनीलात्मिका वाक् शशिरविशिखिभात्मा च यैषाऽनपाया
भोगार्चात्मा च सीतोपनिषदि गदिता वीरलक्ष्मीश्च सीता ।
सा तारस्तत्र वर्णा अभिदधति च विश्वादिमान् लक्ष्मणादीन्
तद्युक्तं रामनाम श्रितरम ! भवतस्तारकं तारकं नः ॥ १७१

ध्येयश्चैषोऽविमुक्ते श्रितरम ! वरणानासिकासंधिमध्ये
वाराणस्यां च रुद्रोऽप्युपदिशति मनुं तारकं संमुमूर्षोः ।
सेतुं सिन्धौ बबन्ध श्रितगतिममृतस्यैष सेतुः पुमर्थान्
किं चित्रं मन्त्रराजो दिशति नतपरित्राणदीक्षस्य तेऽस्य ॥ १७२

## श्रीकृष्णोपनिषत् गोपालतापनी च

यः पुंसां मोहनं त्वां प्रणतमुनिगणो मैथिलीनिर्विशेषं
भोक्तुं सोत्कण्ठ आसीदनघविहरणानन्दधन्यं विधातुम् ।
धर्मात्मा सर्वशास्ता दशरथतनयो गोपकृष्णात्मनेच्छन्
रन्तुं गोप्यादिरूपं तमजनय इति श्रीश ! कृष्णश्रुतिस्थम् ॥ १७३

नित्यैर्जुष्टो विनेता विधिगिरिशवृषादेश्च गीतोपदेष्टा
स्रष्टा नष्टस्य मातोः सुत इह मृतसंजीवनश्चित्रचर्यः ।
योऽसौ श्रीकृष्ण एतं मनुत उपगतः श्रीश ! गोपीजनानां
गोविन्दं वल्लभं त्वां फलमखिलमुपैतीति वेदान्तवुष्टम् ॥ १७४

## श्रीहयग्रीवोपनिषत् श्रीमहाभारते (शान्ति ५९१) प्रबृंहिता—

वेदान् मूर्तांस्तावदधिजलज ( कमल ) मविस्मर्तुकामोऽब्जजन्मा
तावद्वैत्य पर्यस्थितजलकलितौ दानवौ तानहार्ष्टाम् ।

मध्वाभात् तोयबिन्दोर्मधुरिति कठिनात् कैटभो राजसोऽयं
पूर्वोऽभूत् तामसस्तौ श्रितरम ! भवतैवानिरुद्धेन सृष्टौ ॥ १७५

अन्धीभूतो विधिस्त्वां स्वगुरुमखिलसंराध्यमाराध्य जप्यैः
वेदं चक्षुर्ययाचे त्वमपि हयशिरो बिभ्रदत्यन्तशुभ्रम् ।
आकण्ठं प्राच्यदिग्गोज्ज्वलबृहदनुरूपाङ्गसंस्थानभोग्यं
तारोद्गीथस्वरञ्च व्यसृज उदधितः श्रीश ! यातो रसायाम् ॥ १७६

विष्टोदक्पूर्वसिन्धुद्रुतदनुजरहोगुप्तवेदापहारी
हेषारम्भस्थलाभिद्रुतमुभयमदृष्ट्वेदमारान्निवृत्तः ।
दत्वा धात्रे च शेषे शयित उपगतौ रोषणौ तौ जघन्थ
श्रीशोदक्पश्चिमाब्धौ नियतहयशिराः हव्यकव्यादि भुङ्क्ते ॥ १७७

साकं स्रष्ट्राऽथ देवा मुनय इह बलं लोकतन्त्रेऽधिगन्तु
क्षीरोदं प्राप्य चेरुर्महितरम ! तपस्त्वद्वचः शुश्रुवुश्च ।
नित्यं मे यज्ञभागान् वितरथ यदि, वः श्रेय इत्येवमेतैः
स्वं स्वं भागं ददद्भिर्वचनमनुसृतं वैष्णवं यज्ञमिष्ट्वा ॥ १७८

'यज्ञैराराध्यता वो भवतु भवसमृद्ध्यर्थिनां, लब्धभागैः
भाव्यश्चाहं भवद्भिः, फलमभिमतमप्यस्तु देयं चरद्भ्यः ।
यस्तु स्यान्मुक्तिकामैः सनकमुखमतस्थायिभिश्चर्यमाणः
श्रेयान् धर्मो निवृत्तिः मम स' इति रमावास ! भागं व्यधास्त्वम् ॥ १७९

श्रुत्वा धर्मं निवृत्ते विहितवरबले शर्वमुख्ये सुरौघे
स्रष्टा सूनुः स यज्ञाग्रहर ! तव वपुर्द्रष्टुमिच्छन्नतिष्ठत् ।
तादृक्छ्रुत्यर्थतत्त्वप्रवचनमखिलाम्नायसद्म त्वदीयं
मध्वादेर्हन्तृ लक्ष्मीरमण ! हयशिरोऽदर्शयस्त्वं वपुस्तत् ॥ १८०

आत्मज्ञानस्य रोधादभिमतविहतौ देशिकः प्रादुरास्से
पाराशर्यः प्रभावं तव निखिलमिमं पञ्चमे प्राह वेदे ।

शान्तः श्रेष्ठः कृतज्ञः परिचितमुलनः सूक्ष्मधीश्च प्रसिद्धो
दार्जी श्रीमंस्तदास्यस्त्वमसि नरवपुः सर्ववागीश्वरेशः ॥ १८१

दैत्यावब्रह्मसृष्टौ रज इति तम इत्येव वित्तौ निहन्तुं
वीरौ निश्शेषवेदक्षपणरसमितैकार्णवौ श्रीनिवास !
दातुं ब्रह्माण्डसौख्यं मतिमपि महितामिष्ट एषोऽवतारः
ज्येष्ठः श्रेष्ठश्च मुक्तौ घटयति मधुजित् जायमानश्च पश्यन् ॥ १८२

व्याख्यामुद्रां कराब्जैर्दधतमरिदरे पुस्तकं चन्द्रभासं
ज्ञानानन्दस्वरूपं स्फटिकमणिनिभे श्रीश ! पद्मे निषण्णम् ।
सव्योरुस्थानलक्ष्मीरुचिरमखिलविद्येश्वरं मन्त्रराजा-
द्यर्च्यं त्वां भोगमोक्षप्रदमनघहयग्रीवमूर्तिं प्रपद्ये ॥ १८३

( नैतावता निखिलमप्यौपनिषदं वाङ्मयं निर्विचिकित्सप्रामाण्यमध्यवस्यामः । )

अप्रामाण्यं बहूनां स्फुटमुपनिषदां प्राच्यतत्तन्मतस्थ-
प्राज्ञप्रष्ठादृतास्वप्यकृतविवरणास्वन्यदन्यन्निविष्टम् ।
जाबाले ब्रह्मबिन्दावुपनिषदि च महत्त्वाश्रयेऽन्यासु चैवं
दृष्ट्वा श्रीमंस्तवाहं स्तवमिह रचये नैतदर्थान् विमृश्य ॥ १८४

( अथ पुरुषसूक्तार्थसंग्रहशेषतया उत्तरनारायणश्रुत्यर्थोऽप्युपनिबध्यते — )

## उत्तरनारायणश्रुतिः

अद्भ्यो जातोऽण्डपृथ्व्याः स्वयमधिकृतये ते च लीलारसार्थं
प्रागेकोऽवर्तताजस्तव निखिलसृजो व्यूहरूपात् परस्तात् ।
तत्सृष्टं देवमर्त्यप्रभृति च विदधद्रूपमेप्यङ्गनेश !
त्वष्टा त्वं व्यष्टिकृत्त्वात् तव निखिलमिदं शेषमाजन्मसत्त्वम् ॥ १८५

हार्दस्सन्नन्तरात्मा निखिलपतिरसि त्वं स्वकर्मोत्थजन्मा-
द्यस्पृष्टोऽप्यन्तरेवं बहिरपि बहुधा जायसे श्रीनिवास !

प्राज्ञास्ते तत्र हेतुं विदुरनघ ! नतत्राणदिव्यावतार-
स्वैरोद्युक्तस्य, ये ते निरुपधिकयशोभातमिच्छन्ति धाम ॥ १८६

देवेभ्यस्त्वं पुरस्सन् हित उदितवपुः पूर्वदेवान् तपन् स्याः
तद्द्वारा तद्धितश्च श्रितरम ! महितं तेऽवतारे रहस्यम् ।
दिव्यत्वज्जन्मकर्मस्थितिमननपरो ह्यन्तिमप्रत्ययान्त-
प्रज्ञानिष्पत्तितस्त्वां व्रजति हतपुनर्जन्मकर्मेति गीतम् ॥ १८७

दिव्यं वेदाहमेतं मम भवतु नमो ब्राह्मरूपाय देवाः
यत् प्रादुर्भावयन्तः स्तुवत इति वदंस्त्वां प्रति श्रीश ! वक्ति ।
भूस्ते लक्ष्मीश्च पत्न्यौ दिनमुखसमयौ देवसंघश्च देहः
नक्षत्राणि प्रकाशः फलमखिलमदोऽन्यच्च संकल्पयेति ॥ १८८

## पुरुषसूक्तम्

सूक्तं तत् सर्ववेदेष्वपि परिपठितं पौरुषं यस्य हि त्व-
य्यैकान्त्यं स्पष्टघुष्टं स्मृतिषु, तव मितं वैभवं यत्र सर्वम् ।
एतत् नारायणाख्याप्रथितमपि यथाऽम्भस्यपारे तथाऽद्भ्य-
स्संभूतश्चेति भागौ पुरुष उपनिषत्त्वस्तु लक्ष्मीश ! कोऽन्यः ॥ १८९

शक्तिर्मस्तिष्कसाध्या जगति भवति या ज्ञानकर्माक्षजैवं
लक्ष्मीकान्त ! ह्यनन्ता त्वयि धुतकरणापेक्षणे सा सदैव ।
इच्छायां विश्वरूपं कलयसि च भवत्यादिसर्गेऽप्यनन्ते
शीर्षादिस्ते ह्यमुख्यम्, तत इह गदितोऽनन्तशीर्षाक्षिपात् त्वम् ॥ १९०

व्याप्य ब्रह्माण्डभूमिं दशगुणितजलाद्याविभक्तं तमो यत्
क्रान्तो द्रव्यं तदन्तं दशविधमसि तद् विश्वमेतत् त्वमेव ।
श्रीश ! त्वं षड्गुणात्मप्रतिकलकलितर्द्धैश्च मुक्तेः प्रदाता
बद्धास्ते पादमात्रं दिवि तु तव सदा सन्ति नित्यास्त्रिपादः ॥ १९१

तस्माद् दिव्यात्मरूपे दिवि तव भवति व्यंशमीदृग्विधस्त्वं
किं चित्रं भोक्तृभोग्ये यदिह परिगतोऽस्यज्ञनेशानिरुद्धात् ।
त्वत्तोऽसौ पद्मयोनिर्जनिमधित विराट् तत्त एवं मनुर्यः
पश्चाद् भूमौ पुरस्तादपि लसति निजैः सर्वतः सृष्टिभेदैः ॥ १९२

ब्रह्माण्डं चेद् विराट् स्यात्, अनिरुद्धपुरुषस्तत्र जातोऽस्तु धाता
त्वत्तो जातोऽनिरुद्धस्त्वमसि यदि विराट्, स्यात् तदाऽप्येष एषः ।
ब्रह्मा श्रीमन्! विराट् चेत्, मनुवचनबलात् तज्जनिः स्यान्मनुः सः
व्यूहान् संकर्षणाद्यान् क्रमत उपगतश्चाण्डसृष्टिं तनोषि ॥ १९३

अग्नीन्द्रादीन् वृषाद्रीश्वर! सृजति भवान् यज्ञक्लृप्तेः परस्तात्
देवाः साध्यादयश्च व्यदधुरिह मखं प्रागितीदं विमृश्यम् ।
अक्षाद्यं देवशब्दाद्यभिहितमजसंबन्धि मन्यन्त एके
मन्ये पूर्वेऽपि केचित् कति चन कथिताः स्युश्च यज्ञात् परस्तात् ॥ १९४

इन्द्रो देवा मनुश्चर्षय इह मनुपुत्रादयो ये विभिन्नाः
तत्तन्मन्वन्तरेऽत्र प्रथममभिहितास्तत्र केचिद् भवेयुः ।
स्रष्टा पूर्वं प्रयत्य स्वयमपि विहितानेकसर्गः स्वशक्तेः
वैकल्यं वीक्ष्य खिन्नस्तव यजनविधौ व्यापृतः श्रीश! यत् स्यात् ॥ १९५

यद्वा नानास्त्रभूषे त्वयि वृषशिखरिद्योतिरूप! प्रथन्ते
ये ते तत्त्वाभिमानात् ऋषय इति सदा साध्यभावाच्च साध्याः ।
नित्या देवास्त्वदीयाः त इह विधिमुखाशक्तिदृष्ट्या तदर्थं
साक्षाद्वा तन्मुखाद्वा व्यदधत मखमित्यस्तु कस्तत्र दोषः ॥ १९६

आदावाज्याद्यभावात् सुदलतरमुखः क्लृप्त आज्यं वसन्तः
ग्रीष्मश्चेध्मोऽतिशोषी हविरपि नवधान्यागमार्हा शरत् सा ।
चत्वार्यक्षाणि चान्तः दश च महदहङ्कारभूतानि देह-
स्थानि त्रिःसप्त मन्ये बहिरपि महदादीनि लक्ष्मीश! सप्त ॥ १९७

ब्रह्मादिः पूर्वजातः पुरुष इह हविः कल्पितः तत्प्रसन्नो
भूयो यष्टुं व्यधास्त्वं श्रितरम! पृषदाज्यादि यज्ञोपयुक्तम् ।
तेनाप्याराधितस्त्वं तदनु निजशरीरांशदेशाद् व्यतानीः
वेदान् अश्वादिकान् नॄन् विधिमुखकरणाद्याधिदेवांश्च लोकान् ॥ १९८

अज्ञातानेकसर्गोचितपथमखिलाम्नायहीनं कथञ्चित्
यज्ञेनाराध्य लक्ष्मीहयवदन! वृषाद्रीश! संपन्नवेदम् ।
तं त्वं त्वच्चित्तनाभ्यादित इव बहुधा स्वाङ्गतोऽन्यानि सृष्ट्वा
नानासर्गे नियुङ्क्षे स्वयमपि विशसि ज्येष्ठपुत्रं तथाऽन्यान् ॥ १९९

संज्ञामूर्ती त्रिवृत्कृत् त्वमिह कुरुष इत्येष निष्कम्पितोऽर्थः
किन्तु ब्रह्मान्तरात्मा कुरुष इति विधेः स्पष्टतार्थेऽभ्यधायि ।
विस्पष्टे त्वत्कृतत्वे किमिति विधिरिह स्यात् प्रवेश्यस्तदेष
श्रीश! त्वत्सृष्टभिन्नं सृजतु निजनिशान्तेषु चाज्ञादशेषम् ॥ २००

वेधाः श्रीधामवक्षः! प्रभवति भवता नाभिनालीकसुतः
कल्पारम्भे महाम्भस्युपरि हि धरणौ स्थापितायां कृते च ।
तत्तल्लोके विधातुम्, तदुपकृतिरियं युज्यतेऽस्याऽऽदिसर्गे
यद्वा तद्द्वारतस्त्वं सृज सकलमिदं सोऽपि ते शक्तिभूमा ॥ २०१

प्रारम्भे प्रब्रुवंस्त्वां पुरुष इति विराट्सृष्टिमुक्त्वाऽऽह जीवं
श्रीधामन्! ब्रह्ममुख्यं पुरुषमथ मनुष्यादिदेहं यदेवम् ।
तस्मादन्ते महान्तं पुरुषमिति विशिष्याऽऽह पुंसूक्तमेवं
त्वत्तो ब्रह्माऽश्ववक्त्रादविगतमहिमेत्यादिमेष्टाऽश्वसृष्टिः ॥ २०२

पुंसूक्तं मुद्गलाख्योपनिषदि विवृतम्, तेन ते श्रीश! भूमा
चातुर्व्यूह्यं चतुष्पात् प्रकृतिपुरुषयोरुद्भवश्चानिरुद्धात् ।
ध्यानात्मा सृष्टियज्ञो विविक्त इदमक्षाणि यष्टार एवं
सृष्टेस्तस्योपदेष्टा यजनमुगनिरुद्धोऽयमित्यादिरुक्तः ॥ २०३

ईदृक्षं त्वां महान्तं दिवि पुरुष! तमःपारदेशे विभान्तं
सूर्याभं नामरूपे विदधतमवयन् श्रीश! यज्ञैर्विशुद्धैः।
इष्ट्वा सर्वान्तरं त्वाममृत इह भवद्वेदनादेव देशं
नित्यैर्जुष्टं तमेति त्वदनुभवरतब्रह्मशक्रादितुल्यः॥ २०४

यज्ञं विष्णुं भवन्तं कृतयुगकलिता ये त्वदेकार्थयज्ञाः
तत्तच्छब्दोदितं तैरयजत परमैकान्तिधर्मैः सुरौघः।
शीर्षाद्यानन्त्यशाली श्रितरम! भुवनात्मा चतुष्पात् विराडा-
द्याधाता धातुरर्थे कृतजगत् अनघज्योतिरत्नासि वेद्यः॥ २०५

कालेऽर्चिर्धस्रशुक्लोत्तरगमनसमावायुसूर्याब्जविद्यु-
त्याथोनाथेन्द्रवेधोगमितम् अनुगतं वैद्युतामानवेन।
अव्यक्ते त्यक्तसूक्ष्मं व्यतिगतविरजं ब्रह्मदेहं विभूष्य
श्रीमन्! आनाय्य भक्तं श्रितपदमथ संभाष्य सायुज्यदोऽसि॥ २०६

छान्दोग्येशाख्य शुभ्राश्वतरवरशिखामुण्डकप्रश्नमुख्ये
प्रायः पुंसूक्तवत् त्वं पुरुष इति समस्तेऽथ विष्णुः कठादौ।
सौबाले तैत्तिरीयादिषु च महति च श्रीश! नारायणाख्यः
ख्यातोऽसि ब्रह्मबिन्दौ वृषशिखरिपते! वासुदेवः सुदेवः॥ २०७

द्वात्रिंशत् सन्ति विद्यास्तव पदभजनेऽत्रेति भूयान् प्रवादः
वेदेऽनन्ते तदर्थे त्वयि बहुजननेऽनन्तकल्याणपूर्णे।
संख्याने कः समर्थः स्वयमिह नतरामद्य निष्कर्षशक्तिः
भीष्मान्तो भक्तियोगो भुवि बत यदि वा श्रीश! नाथान्त एषः॥ २०८

एकैवाऽऽद्यन्तमेकं प्रकरणमिति या नाचिकेताख्यविद्या
तन्मध्ये केचिदत्रप्रमितमुखवचस्त्वाहुरन्यान्यविद्याम्।
यां विद्यां चीर्णशीर्षव्रतनियमविधिर्नैव भिन्तेऽक्षराख्यां
ताश्चान्या केऽपि गार्ग्यक्षरमतित इति श्रीश! किं प्राह्यमत्र?॥ २०९

ज्योतिज्योतिष्टमन्त्रं महितरम ! ततः पाञ्चजन्याश्रयोक्तिः
प्राणादिप्राणतादेर्वचनमपि विभिन्नार्थताभ्रान्तियोग्यम् ।
मत्वा व्यासोऽसुसूत्रद् विनिगमकमुशन् एकवाक्यत्वरूपं
यं ह्यर्थम् , तं तदन्यं त्वपि वदन्ति तव ज्योतिषांज्योतिरुक्तिः ॥ २१०

विद्या देवादिजुष्टा मकृतविसदृशी ज्योतिषां ज्योतिराख्या
ब्रह्मप्रावण्यसिद्धयै श्रितरम ! कथिता मध्य इत्याशयीरन् ।
पुंविद्या तैत्तिरीये कथमपि न पृथग्भावमाप्नोति काम्या-
स्त्वादित्याकाशमुख्यास्तदिह न गणनं तत्तत् अत्यन्तहृद्यम् ॥ २११

काम्याऽकाम्यात्मिका वा त्वयि भवतु मतिर्दृष्टयदृष्टयात्मिका वा
या इष्टाः ब्रह्मसूत्रेष्विह तत इतराश्चापि विद्यास्त्रयीष्टाः ।
शङ्के शारीरकोदाहृतविषयवचोमात्रमाद्यन्तमालो-
ड्यैता द्वात्रिंशदुक्ताः कथमपि बृहदारण्यकान्तश्रुतीर्वा ॥ २१२

इत्थं पुंसूक्तविद्याद्यनवधिनिगमोपज्ञविद्यैकलभ्यं
विख्याते ताण्डिकौषीतकितलवकराद्युक्तनानाविशेषैः ।
दिव्ये धामन्यनन्ते सह सरसिजया भ्राजमानं भवन्तं
सन्तोऽद्य श्रीश ! गन्तुं द्वयकरणभरन्यासविद्यां गृणन्ति ॥ २१३

पूर्णस्त्वं नित्यवन्द्यः पर इह निखिलानुग्रहेदम्परस्सन्
व्यूहं यातोऽवतारं विभवमपि हृदन्तःस्थमर्चामयश्च ।
कारुण्यैकान्तधामन् ! कलिकलुषहृदो वेङ्कटाद्रौ स्थितोऽस्मिन्
पासि प्रख्यापितात्मा शरणमुपयतः श्रीश ! विश्राणितेष्टः ॥ २१४

प्रज्ञा चर्या विरक्तिः परमतनिकृतिः स्वात्मसिद्धान्तरक्षा
निर्दुष्टस्पष्टहृद्यव्यवहृतिरपि यं ह्यञ्जसोपघ्नयन्ति ।
सोऽयं श्रीरङ्गरामानुजमुनिरनघस्तद्गुरुस्तद्गुरूद्धाः
सन्तोऽन्ये च त्वदङ्घ्रिप्रवणधियि मयि श्रीश ! सन्तु प्रसन्नाः ॥ २१५

यो यं तर्कार्णवाख्यां बिरुदमनुपमं पूर्वतन्त्रादिकेऽपि
प्रापय्य प्रौढनानाकृतिकरणयशश्चासि हृष्टोऽद्य स त्वम् ।
वीरश्रीराघवं श्रीपरिबृढ ! कृपया प्रेर्य तं भ्राजसे माम्
इत्थं वेदान्तपुष्पाञ्जलिविहितनिजप्रीतिभूमाभिरामः ॥ २१६

श्रीरस्तु

श्रीः

एवमयं वेदान्तपुष्पाञ्जलिर्यस्मै परस्मै ब्रह्मणे श्रीनिवासाय सादरं समर्प्यते, तस्यैवास्य औपनिषदपुरुषस्यार्चनोपयुक्तानि पावनतमानि औपनिषदानि नामानि परिगणयितुमादौ उपनिषत्सु दशसु शब्दतोऽर्थतश्चोपलब्धानि यथार्हं परिशील्य क्रमेणेह निर्दिशामः — अत्यन्तसूक्ष्मेक्षिकायाम् अन्यान्यपि नामानि निर्देष्टव्यानि भवेयुः, अथापि अनतिस्थूलया दृष्ट्या क्रियते इयं गणनेति भाव्यम् ।

## ईशोपनिषदि

ईट्, अनेजत्, एकम्, मनसोजवीयः पूर्वमर्षत्, तिष्ठत्, दूरस्थम्, अन्तिकस्थम्, अन्तःस्थम्, बहिःष्ठम्, आत्मा, (अकायम्, अव्रणम्, अस्नाविरम्, शुद्धम्, अपापविद्धम्) कविः, मनीषी, परिभूः स्वयम्भूः, विधाता, अमृतम्, पूषा, एकर्षिः, यमः, सूर्यः, प्राजापत्यः, कल्याणतमरूपः, पुरुषः क्रतुः, अग्निः, देवः, विद्वान् ॥

## केनोपनिषदि

देवः, श्रोत्रम्, मनः, वाक्, प्राणः, चक्षुः, वागाद्यवशम्, वागाद्याविर्भावकम्, ब्रह्म, अमतम्, मतम्, अविज्ञातम्, विज्ञातम्, प्रतिबोधविदितम्, यक्षम्, वनम्, ज्येयस्स्वर्गप्रतिष्ठितम् ॥

## कठोपनिषदि

अनन्तः, श्रेयः, श्रवणदुर्लभः, शृण्वदवेद्यः, कुशलानुशिष्टकुशलगम्यः, दुर्दर्शः, गूढः, गुहाहितः, गह्वरेष्ठः, पुराणः, अध्यात्मयोगाधिकयोगगम्यः, पदम् ओम्,

अणोरणीयान्, महतो महीयान्, धातुः, आसीनः, दूरगामी, शयानः, सर्वयायी, मदामदः, अशरीरः, महाविभुः, ब्रह्मक्षत्रौदनः, मृत्यूपसेचनः, ऋतपाः, आतपः, ईजानसेतुः, अक्षरम्, अभयपारम्, विष्णुः, पराकाष्ठा, परागतिः, सर्वभूतगूढः, अग्र्यबुद्धिदृश्यः, शान्तात्मा, नित्यं शब्दादिरहितः, अनाद्यनन्तः, महतः परः, ध्रुवः, अन्तरात्मा, प्रत्यगात्मा, भूतभव्येशानः; पूर्वजपरमानुग्राही, अदित्यात्मा, अग्न्यात्मा, सूर्यात्मा, इह चामुत्रचस्थित एकः, अङ्गुष्ठमात्रपुरुषः, विमुक्तात्मा, बृहद्दतम्, गुह्यम्, सनातनम्, सुप्तभोग्यनिर्माता, शुक्रम्, सर्ववस्तुप्रतिरूपः, निर्लेपः, वशी, आत्मस्थः, नित्यैकचेतनः, अनिर्देश्यपरमसुखम्, तेजोऽभिभावी, भाप्रदः, सर्वकम्पनः, व्यापकः, अलिङ्गः, अदृश्यरूपः, हृन्मनीषाभिक्लृप्तः, अस्तीत्येवोपलब्धव्यः ॥

## प्रश्नोपनिषदि —

ब्रह्म, प्रजापतिः, वैश्वानरः, विश्वरूपः, प्राणः, अग्निः, हरिः, जातवेदाः, परायणम्, ज्योतिः, सूर्यः, आत्मा, प्राणानामायतनम्, अमृतम्, अभयम्, परायणम्, विरजो ब्रह्मलोकः, पर्जन्यः, मघवान्, वायुः, पृथिवी, रयिः, देवः, सत्, असत्, अमृतम्, परात्मा, अक्षरात्मा, अच्छायम्, अशरीरम्, अलोहितम्, शुभ्रमक्षरम्, परपुरुषः, परात् परः, पुरिशयः, शान्तम्, अजरम्, अमृतम्, अभयम्, परम् ॥

## मुण्डकोपनिषदि —

सर्वविद्याप्रतिष्ठाविद्यावेद्यः, अक्षरम्, अदृश्यम्, अग्राह्यम्, अगोत्रम्, अवर्णम्, अचक्षुःश्रोत्रम्, अपाणिपादम्, नित्यः, विभुः, सर्वगतः, सुसूक्ष्मः, भूतयोनिः, सर्वपरः, अणिष्ठः, ज्येष्ठः, पूर्णसर्वः, सर्वज्ञः, सर्ववित्, ज्ञानमयतपाः, सूर्यरश्मिनेयस्थलाधिवासः, देवानां पतिः, एकः, तपः, अमृतः, अव्ययात्मा, अकृतः, दिव्यः, अमूर्तः, अजः, अप्राणः, अमनाः, शुभ्रः, अक्षरात् परतः परः, द्युलोकादि-मूर्धादिः, सर्वभूतान्तरात्मा, परामृतम्, गुहानिहितम्, आविःसंनिहितम्, गुहाचरम्, सदसद्वरेण्यम्, विज्ञानात् परम्, वरिष्ठम्, अर्चिमत्, सत्यम्, अमृतसेतुः, बहुधा जायमानः, दिव्यब्रह्मपुरप्रतिष्ठितः, मनोमयः, प्राणशरीरनेता, अन्नप्रतिष्ठितः, आनन्द-

रूपः, परावरः, परापरविद्यावेद्यः, विरजः, निष्कलम्, शुभ्रम्, ज्योतिषां ज्योतिः, चन्द्रार्कवपुः, कृतभूतभावनः, सुपर्णः, सखा, सयुक्, अनश्नन्, जुष्टः, रुक्मवर्णः, कर्ता, ईशः, ब्रह्मयोनिः, ज्योतिर्मयः, सत्यपरमनिधानम्, बृहत्, दिव्यम्, अचिन्त्यरूपम्, सूक्ष्मतरम्, परमंधाम, सर्वगः, परामृतम्, दिव्यपुरुषः ॥

## माण्डूक्योपनिषदि —

जागरितस्थानः, बहिःप्रज्ञः, सप्ताङ्गः, एकोनविंशतिमुखः, स्थूलभुक्, वैश्वानरः, स्वप्नस्थानः, अन्तःप्रज्ञः, प्रविविक्तभुक्, तैजसः, सुषुप्तस्थानः, एकीभूतः, प्रज्ञानघनः, आनन्दमयः, आनन्दभुक्, चेतोमुखः, प्राज्ञः, सर्वेश्वरः, सर्वज्ञः, अन्तर्यामी, सर्वयोनिः, प्रभवः, अप्ययः, नान्तःप्रज्ञः, नबहिःप्रज्ञः, नोभयतःप्रज्ञः, नप्रज्ञानघनः, नप्रज्ञः, नाप्रज्ञः, अदृष्टम्, अव्यवहार्यम्, अग्राह्यम्, अलक्षणम्, अचिन्त्यम्, अव्यपदेश्यम्, ऐकात्म्यप्रत्ययसारम्, प्रपञ्चोपशमम्, शान्तम्, शिवम्, अद्वैतम्, अः, उः, मः, ओम्, अमात्रः, अव्यवहार्यः, प्रपञ्चोपशमः, शिवः, अद्वैतः, आत्मा, ब्रह्म ॥

## तैत्तिरीयोपनिषदि —

विष्णुरुरुक्रमः, विश्वम्, अमृतम्, ब्रह्म, मनोमयः, पुरुषः, अमृतः, हिरण्मयः, इन्द्रः, सत्यात्मप्राणः, सत्यम्, ज्ञानम्, अनन्तम्, ब्रह्म, विपश्चित्, आत्मा, आनन्दमयः, शारीरः, असत्. सत्, सुकृतम्, रसः, आकाशआनन्दः, अदृश्यः, अनात्म्यः, अनिरुक्तः, अनिलयनः, पुरुषादित्यवर्ती, अन्नमयात्मा, प्राणमयात्मा, मनोमयात्मा, विज्ञानमयात्मा, सर्वभूतजनिजीवनसंवेशनहेतुः, परमव्योम, आनन्दः, अन्नम्, अन्नादः, प्रथमजाः, अमृतस्य नाभिः, अम्भस्यपारेऽभिव्यक्तः, भुवनमध्यस्थितः, नाकस्य पृष्ठेनिषण्णः, महतो महीयान्, ज्योतिरनुप्रविष्टः, प्रजापतिः, अन्तश्चारी, सृष्टिस्थितिलयस्थानम्, अक्षरपरमव्योमवासी, कविवेद्यः, विद्युत्पुरुषः, कालकल्पकः, अग्राह्यः, अनीशकः, महायशाः, अदृश्यरूपः, अद्भ्यःसंभूतः, हिरण्यगर्भः, विश्वतोमुखः, विश्वतश्चक्षुः, विश्वतोहस्तः, विश्वतस्पात्, जनयिता, विद्वान्, गन्धर्वः, त्रिपात्, बन्धुः, जनिता, विधाता, विश्ववेदी, प्रजापतिः, सदसस्पतिः,

अद्भुतः, प्रियः, काम्यः, जातवेदाः, नारायणः, वासुदेवः, विष्णुः, भूम्युद्धारकः, वराहः, कृष्णः, शतबाहुः, वशी, धाता, गोप्ता, ज्योतिः, समुद्रः, इन्दुः, पूतनाजित्, सनात्, अक्रतुः, सर्वप्रभवः, ब्रह्मा, पदवीः, ऋष्यादिरूपः, स्वधितिः, सोमः, हंसः, वसुः, होता, अतिथिः, नृषत्, वरसत्, ऋतसत्, व्योमसत्, अब्जादिरूपः, षोडशी, विधर्ता, सविता, नृचक्षुः, घृतम्, देवजिह्वा, वृषभः, त्रिधाबद्धः, वेनः, विश्वाधिकः, रुद्रः, महर्षिः, अनन्यपरः, अणीयोरहितः, महीयोरहितः, परामृतम्, दह्रगगनम्, विशोकः, वेदादिस्वरपरः, महेश्वरः, सहस्रशीर्षः, विश्वाक्षः, विश्वशम्भुः, अक्षरदेवः, परमप्रभुः, विश्वपतिः, आत्मेश्वरः, शाश्वतशिवः, अच्युतः, महाज्ञेयः, विश्वात्मा, परायणम्, परब्रह्म, परतत्त्वम्, परज्योतिः, अनन्तः, अव्ययः, कविः, समुद्रेन्तः, परमात्मा, ब्रह्मा, शिवः, इन्द्रः, अक्षरपरमस्वराट्, ऋतम्, सत्यम्, कृष्णपिङ्गलः, विरूपाक्षः, ऊर्ध्वरेताः, अङ्गुष्ठमात्रः, अङ्गुष्ठसमाश्रितः, सर्वेशः, प्रभुः, विश्वभुक्, सद्योजातः, भवोद्भवः, वामदेवः, रुद्रः, कालः, कलविकरणः, बलप्रमथनः, सर्वभूतदमनः, मनोन्मनः, सर्वविद्येशानः, सर्वभूतेश्वरः, ब्रह्माधिपतिः, सदाशिवः, मधु, दुःस्वप्नहा, दुरुस्वहा, हरिः, आदित्यपुरुषः, परमेष्ठी, ब्रह्मात्मा, पञ्चविधः, पञ्चात्मा, जिज्ञासु (स) क्लृप्तः, ऋतजाः, रयिष्ठाः, श्रद्धासत्यः, महस्वान्, वसुरण्य (ण्व) :, संधाता, विश्वसृक्, तेजोदाः, वर्चोदाः, द्युम्नोदाः, महः, ब्रह्म, ओम् ॥

## ऐतरेयोपनिषदि ( आत्मषट्के )—

आत्मा, ब्रह्म, इदन्द्रः, इन्द्रः, प्रज्ञानम्, प्रज्ञः ॥

## छान्दोग्ये —

हिरण्मयपुरुषः, हिरण्यश्मश्रुः, हिरण्यकेशः, आप्रणखात् सुवर्णः, कप्यासपुण्डरीकाक्षः, उत्, ऋक्सामगेष्णः, अन्तरादित्ये पुरुषः, अन्तरक्षिणपुरुषः, ऊर्ध्वलोकदेवकामेशः, अर्वाग्लोकमनुष्यकामेशः, सर्ववीणा गीयमानः, आकाशः, भूतोत्पत्त्यस्तमयहेतुः, ज्यायान्, परायणम्, अनन्तः, परोवरीयान्, प्राणः, विशोकनाकस्थानः, ब्रह्म, मध्वादित्यः, वस्वादिरूपः, उदयास्तमयरहितः, एकलः, सत्यम्, चतुष्पदषड्विधगायत्री, भूतपृथिवीशरीरहृदयचरणः, सर्वभूतगाता, सर्वभूतत्राता, सर्वभूतप्रतिष्ठा, सर्वभूतान-

तिवर्त्यः, प्राणप्रतिष्ठा. प्राणानतिवर्त्यः, पुरुष , पूर्णम् , अप्रवर्ति, पञ्चस्वर्गद्वारपब्रह्मपुरुषः, परज्योतिः, द्युस्थज्योतिः, कौक्षेयज्योतिरात्मा, स्वजलानसर्वम् , मनोमयः, प्राणशरीरः, भारूपः, सत्यसंकल्पः, आकाशात्मा, सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः, सर्वमिदमभ्यात्तः, अवाकी, अनादरः, आत्मा, अणीयान् , ज्यायान् , अच्युतम् , अक्षितम् . प्राणसंशितम् , प्रत्नादिः, उत्तरज्योति , उत्तमज्योतिः, चतुष्पाद्ब्रह्म, आदित्यब्रह्म, अग्न्यादिसंवर्गवायुः, वागादिसंवर्गप्राणः, एकदेवः, देवात्मा, प्रजाजनयिता, हिरण्यदंष्ट्रः, बभसः, अनसूरिः, अनद्यमानः, अनन्नादी, कृतम् , विराट्, चतुश्च-तुष्कलपदः, प्रकाशवत्पात् , अनन्तवत्पात् , ज्योतिष्मत्पात् , आयतनवत्पात् , षोडशकलब्रह्म, प्राणब्रह्म, कखब्रह्म, अक्षिपुरुषः, संयद्वामः, वामनीः, भामनीः, अर्चिरादिगम्यः, पञ्चाग्निपुरुषरूपः, वैश्वानरात्मा, सुतेजोमूर्धा, विश्वरूपचक्षुः, पृथग्वर्त्म-प्राणः, बहुलसंदेहः, रयिवस्तिः, प्रतिष्ठापात् , प्रादेशमात्रः, अभिविमानः, प्राणाग्नि-होत्रसमाराध्यः, सत् , आदेश , सर्वविज्ञानविज्ञानः, एकम् , अद्वितीयम् , परादेवता, अणिमा, आत्मा, सत्यम् , सर्वात्मा, उपासकात्मा, कार्यात्मा, जगद्धेतुः, समष्टिकृत् , त्रिवृत्कृत् , व्यष्टिकृत् , चिदचिल्लयभूमिः, नानाबीजलयस्थानम् , चिन्नदीनिर्गमाम्भोधिः, अविनाशिचिदाश्रयः, सूक्ष्मः, स्थूलहेतुः, व्यापी, आचार्यवद्वेद्य., संपन्नाभिमानहन्ता, अपुनर्बन्धकृत् , नामादिब्रह्म, भूमा, भूमसुखम् , सत्यम् , स्वमहिमप्रतिष्ठितः, सर्वोत्पत्ति-स्थानम् , मृत्युरोगदुःखशमनदर्शनः, सर्वदृष्टिसर्वानुभूहेतुः, मुक्तनानाभावहेतुः, शुद्ध-लभ्यध्रुवस्मृतिः, स्मृतिमोच्याखिलग्रन्थिः, देहपुरवासी, दहरपुण्डरीकवेश्मा, दहराकाशः, सर्वाधारमहाकाशः, अपहतपाप्मा, विजरः, विमृत्युः, विशोकः, विजिघित्सः, अपिपासः, सत्यकामः, सत्यसंकल्पः, समाहितसर्वकामः, अजीर्यन् , अहन्यमानः, सत्यपुरम् , अनृतापिधानसत्यकामः, अहरहर्गच्छदवेद्यः, हृदयात्मा, संप्रसादसंपद्यमानः, परंज्योतिः, अमृताभयब्रह्म, सत्तियरूपसत्यम् , सेतुः, विधृतिः, सकृद् विभातब्रह्मलोकः, अरार्णव-स्थानः, ण्यार्णवस्थानः, ऐरम्मदीयसरस्वान् , सोमसवनाश्वत्थस्थानः, अपराजिताधिष्ठाता, प्रभुविमित विद्योती, उत्तमपुरुषः, श्यामः, शबलः, अकृतलोकः, आकाशः, नामरूप-निर्वोढा, यशः, प्रजापतिः, सभावेश्मसमास्थितः ।

## बृहदारण्यकोपनिषदि ---

अश्वः, मृत्युः, अशनाया, अर्चन्, अर्कः, अदितिः, प्रजापतिः, सत्, ज्योतिः, अमृतम्, आत्मा, पुरुषविधः, अहन्नामा, पुरुषः, सृष्टिः, विसृष्टिः, अतिसृष्टिः, अव्याकृतम्, व्याकृतम्, आनखाग्रप्रविष्टः, प्राणः, प्राणन्, वदन्, वाक्, पश्यन्, चक्षु, शृण्वन्, श्रोत्रम्, मन्वानः, मनः, पदनीयम्, सर्वप्रेयः, ब्रह्म, अहं, मनुः, सूर्यः, लोकः, पिता, अक्षितिः, ऊर्क्, आकाशः, सत्यस्य सत्यम्, मूर्तामूर्तरूपः, त्यरसः, माहारजनरूपः, पाण्ड्वाविकरूपः, इन्द्रगोपरूप, अग्न्यर्चीरूपः, पुण्डरीकरूपः, सकृद्विद्युत्तरूपः, अनन्यपरः, महद्भूतम्, अनन्तम्, अपारम्, विज्ञानघनः, विज्ञाता, मधु, तेजोमयः, अमृतमयः, शारीरः, रैतसः, वाङ्मयः, प्राणः, चाक्षुषः, श्रौत्रःप्रातिश्रुत्कः, मानसः, तैजसः, शाब्दः हृद्याकाशः, धार्मः, सात्यः, मानुषः, सर्वभूताधिपतिः, सर्वभूतराजः, पक्षी, पुरिशयः, प्रतिरूपः, इन्द्रः, हरिः, अपूर्वम्, अनपरम्, अबाह्यम्, अनन्तरम्, सर्वानुभूः साक्षादपरोक्षाद् ब्रह्म, सर्वान्तरः, आत्मात्मा, अशनायादिषट्कातिगः, अनार्तः, अन्तर्यामी, सर्वस्थः, सर्वान्तरः, सर्वाविद्यः, सर्वशरीरः, सर्वान्तर्यन्ता, अमृतः, अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतोमन्ता, अविज्ञातो विज्ञाता, अनन्यद्रष्टृकः, अनन्यश्रोतृकः, अनन्यमन्तृकः, अनन्यविज्ञातृकः, स्वप्रोताकाशम्, अक्षरम्, अनणु, अह्रस्वम्, अदीर्घम्, अलोहितम्, अस्नेहम्, अच्छायम्, अतमः, अवायु, अनाकाशम्, असङ्गम्, अरसम्, अगन्धम्, अचक्षुष्कम्, अश्रोत्रम्, अवाक्, अमनः, अतेजस्कम्, अप्राणम्, अमुखम्, अमात्रम्, अकिञ्चिदशिता, अकिञ्चिदशनीयः, सर्वप्रशासकः, अन्तवत्फलप्रादकावेदनः, अनन्तफलहेतुवेदनः, एकदेवः, अष्टविधपुरुषात्मा, समानप्रतिष्ठा, नेतिनेत्यादेश्यः, अगृह्यः, अशीर्यः, असितः, आयतनाष्टकातिगः, लोकाष्टकातिगः, देवाष्टकातिगः, पुरुषाष्टकातिगः, औपनिषदपुरुषः, मूलम्, विज्ञानम्, आनन्दम्, रातिः, परायणम्, वाग्ब्रह्म प्राणब्रह्म, चक्षुर्ब्रह्म, श्रोत्रब्रह्म, मनोब्रह्म, हृदयब्रह्म, इन्धः, दक्षिणाक्षिपुरुषः, इन्द्रः, विराट्पतिः, लोहितपिण्डान्नः, जालकमयप्रावरणः, ऊर्ध्वनाडीसृतिः, प्रविविक्ताहारतरः, अभयम्, पुरुषज्योतिः, स्वाप्नकर्ता, सलिलम्, परमागतिः, परमा संपत्, परमोलोकः, परमानन्दः, शतगुणनकाष्ठाप्राप्तानन्दः, ब्रह्मलोकः, प्राज्ञात्मा,

अनुवित्तः, विश्वकृत्, सर्वकर्ता, ज्योतिषां ज्योतिः, भूतभव्येशानः, पञ्चजनप्रतिष्ठा, पुराणम्, अग्र्यम्, एकधानुद्रष्टव्यम्, अप्रमेयम्, ध्रुवम्, विरजः, आकाशात् परः, अजः, महान्, महात्मा, सर्वस्यवशी, सर्वस्येशानः, सर्वस्याधिपतिः, साध्वसाधुकर्मायत्तोत्कर्षनिकर्षरहितः, सर्वेश्वरः, भूताधिपतिः, भूतपालः, सेतुः, विधरणः, वेदानुवचनादिवेद्यः, अन्नदः, वसुदानः, अजः, अजरः, अमरः, अमृतः, स्वनिःश्वसितप्रायसर्वः, प्रज्ञानघनः, पूर्णम्, यक्षम्, प्रथमजम्, सत्यम्, मण्डलपुरुषः, भूराद्यवयवकः, अहर्नामा अक्षिपुरुषः, अहन्नामा, मनोमयः, भाः, सत्यः, विद्युद्ब्रह्म, अन्नब्रह्म, प्राणब्रह्म, विरब्रह्म, गायत्रीतुरीयपदप्रमेयः, वैद्युतमानसपुरुषप्रायणीयः, अपुनरावृत्तिस्थानलोकः ।

## श्वेताश्वतरोपनिषदि —

कारणं ब्रह्म, देवात्मा, एकनेमिः, त्रिवृत्, षोडशान्तः, शतार्धारः, अष्टकषट्कयुक्तः, विश्वरूपैकपाशः, त्रिमार्गभेदः, द्विनिमित्तैकमोहः, सर्वाजीवः, सर्वसंस्थः, बृहन्, ब्रह्मचक्रम्, प्रेरिता, ईशः, ज्ञः, अनन्तः, आत्मा, विश्वरूपः, आत्मसंस्थः, सर्वव्यापी, सविता, महीदेवः, तत्त्वम्, अजः, ध्रुवः, विशुद्धः, जालवान्, रुद्रः, गोपाः, विश्वाधिकः, महर्षिः, गिरिशन्तः, विश्वपरिवेष्टिता, महापुरुषः, आदित्यवर्णः, उत्तरतरम्, अरूपम्, अनामयम्, सर्वाननशिरोग्रीवः, सर्वभूतगुहाशयः, भगवान्, सर्वगतः, शिवः, महाप्रभुः, सत्त्वप्रवर्तकः, ईशानः, अव्ययः, अङ्गुष्ठमात्रः, सर्वजनहृदयसंनिविष्टः, हृन्मनीषाभिक्लृप्तः, सहस्रशीर्षः, सहस्राक्षः, सहस्रपात्, अमृतत्वेशानः, सर्वतः पाणिपादः, सर्वतोक्षिशिरोमुखः, सर्वतः श्रुतिमान्, सर्वेन्द्रियविवर्जितः, सर्वप्रभुः, सर्वशरणम्, सर्वसुहृत्, अपाणिपाद, जवनः, ग्रहीता, अचक्षुः, अकर्णः, वेदिता, वेदितृविहीनः, अग्र्यपुरुषः, अजरः, पुराणः, धाता, अणोरणीयान्, महतो महीयान्, गुहानिहितः, सुपर्णः, सखा, अनश्नन्, जुष्ट, मायी, महेश्वरः, वरदः, ईशः, देवाधिपः, विश्वस्रष्टा, अनेकरूपः, विश्वकर्मा, वरेण्यम्, अप्रतिमः, हृदिस्थः, अनाद्यनन्तः, अनेकरूपः, भावग्राह्यः, भावाभावकरः, कालकालः, गुणी, सर्वविद्यः-धर्मावहः, पापनुत्, भगेशः, आत्मस्थं, विश्वधाम, ईश्वराणां परमः, देवतानां परमः, पतीनां पतिः, भुवनेशः, अकार्यकरणः, निःसमाभ्यधिकः, परविविधशक्तिः परविधवि-

स्वाभाविकज्ञानबलक्रियः, अपतिः, अनीशः, अलिङ्गः, करणाधिपाधिपः, जनकादिरहितः, सर्वभूतान्तरात्मा, कर्माध्यक्षः, सर्वभूताधिवासः, साक्षी, चेता, केवलः, निर्गुणः, सर्वचेतनकामविधाता, नित्यचेतनः, एकहंसः, विश्वकृत्, विश्ववित्, आत्मयोनिः, प्रधानक्षेत्रज्ञपतिः, गुणेशः, संसारमोक्षस्थितिबन्धहेतुः, ब्रह्मविधायी, वेदोपदेष्टा, आत्मबुद्धिप्रकाशः, निष्कलः, निष्क्रियः, शान्तः, निरवद्यः, निरञ्जनः, अमृतपरसेतुः,

## मन्त्रिकोपनिषदि —

अष्टपात्-शुचिः, त्रिसूत्रः, अणुः, निर्गुणः, अजाध्यासकः, स्वच्छन्दः, उदासीनः, षड्विंशः, सप्तविंशः, अद्वैतम्, द्वैतम्, त्र्यात्मा, पञ्चात्मा, सप्तात्मा, भगवान् ।

## सुबालोपनिषदि —

नासन्नसन्नसदसत्, सहस्रशीर्षः, सहस्राक्षः, सहस्रपात्, महद्भूतम्, वैश्वानरः, परदेवः, असत्, अजातम्, अभूतम्, अप्रतिष्ठितम्, अशब्दम्, महान्, बृहन्, अप्राणत्वादिमत्, अपारम्, अनिर्देश्यम्, अनपावृतम्, अप्रकाश्यम्, असंवृतम्, चक्षुरादिकरणादिनिविष्टः, सर्वज्ञः, सर्वेश्वरः, सर्वाधिपतिः, अन्तर्यामी, सर्वयोनिः, सर्वसौख्योपास्यमानः, वेदशास्त्रोपास्यमानः, सर्वान्नः, अनन्नम्, सर्वनयनः, प्रशास्ता, अन्नमयो भूतात्मा, प्राणमय इन्द्रियात्मा, मनोमयः संकल्पात्मा, विज्ञानमयः कालात्मा, आनन्दमयो लयात्मा, ऐक्यरहितः, द्वैतरहितः, मर्त्यभावरहितः, मरणसंबन्धविलय-प्रसंगरहितः, नान्तःप्रज्ञः, नबहिःप्रज्ञः, नोभयतःप्रज्ञः, नप्रज्ञानघनः, नप्रज्ञः, नाप्रज्ञः, विदितवेद्यरहितः, अमूलम्, अनाधारम्, दिव्यः, देवः, एकः, नारायणः, धाता, विधाता, कर्ता, विकर्ता, उद्भवः, संभवः, माता, पिता, भ्राता, निवासः, शरणम्, सुहृद्, गतिः, विष्णुः, परमपदवासी, पुरुषः, अमृतत्वस्येशानः, अव्यक्ता-क्षरमृत्युप्रभृतिसर्वशरीरी, सर्वान्तरः, सर्वसंचारी सर्ववेद्यः, सर्वभूतान्तरात्मा, अपहत-पाप्मा, अचिन्त्यरूपः, असङ्गः, तेजस्कायः, विभ्राजमानः, अशोकम्, अनन्तम्, अभयम्, निर्बीजम्, निर्वाणम्, सत्यः, श्रीमन्नारायणः ॥

---

उपनिषदन्तरेषु दृश्यमानानि नामानि प्रायेणैवंरूपाण्येवेति न पृथङ्निर्दिश्यन्ते। आस्वास्वुपनिषत्सु आम्रेडनं मा भूदिति अनेकनामपुनर्निर्देशपरित्यागेऽपि बहूनि पौनःपुन्येनेह निर्दिष्टवन्त एव स्मः। केवलं स्थलप्रत्यभिज्ञा-आदरातिशयादिकृत स निर्देश इति कृत्वा वाचकमहाशयाः सर्वथा शब्दार्थपौनरुक्त्यराहित्येन परिग्राह्याणि परिशीलयितुं प्रभवन्ति; तत्रापि परमपुरुषाभ्यर्चनपरमोपयोगितया, अष्टोत्तरसहस्रम्, तथा अष्टोत्तरशतञ्च प्रशस्तानि नामानि स्वमनःप्रियाणि स्वयं समालोच्य परिग्रहीतुमर्हन्तीति तत्र न वयं कतिपयेषु स्वनिर्भरं निरूपयितुमभिलषामः। यथा भगवता बादरायणेन भारते ऋषिभिः परिगीतानि भीष्ममुखोद्गतानि सहस्रसंख्यानि नामानि सर्वपापभयापहानि भगवतः श्रीमतो नारायणस्य परिगणितानि, यथा च प्रपन्नजनसंतानकूटस्थस्य अव्याजभगवदनुग्रहभावितानवद्यसर्ववस्तुसाक्षात्कारस्य श्रीमतो वकुलभूषणस्य दिव्यसूरेः श्रीमुखसूक्ते सहस्राधिकानि गौणानि नामानि सर्वतोमुखवैदुष्यैः सर्वतन्त्रस्वतन्त्रैः कवितार्किकसिंहैः श्रीमन्निगमान्तमहादेशिकैः उभयवेदान्ततत्त्वार्थनिर्धारणधुरन्धरैः उद्धृतानि, जपार्चनाद्यौपयिकानि भाव्यन्ते, तथा वा, ततोऽधिकं वा मूलभूतवेदान्तविलसितानि दिव्यानि भगवतो नामानीमानि तत्रोपयुज्यन्त इति विभाव्य विशेषज्ञैरशेषैरादियेरन्निति विस्रम्भप्रेरितेन मयैवमिह संकलितानीति सन्तो मन्तुमर्हन्ति।

अथ दशोपनिषद्भाष्यप्रकाशनात् परस्तात् क्रियमाणस्यास्य परिशिष्टोपनिषद्भाष्यप्रकाशस्य विषये वक्तव्यं किञ्चिदुपक्षिप्यते—ब्रह्मसूत्रेषु भगवता बादरायणेन एतदुपनिषद्गतान्यपि वाक्यानि विषयीकृत्य विचारः प्रावर्तीति स्थलान्तरदर्शितया सूच्या सुगममेव। अतएव शारीरकशास्त्राध्यायिनामवश्यविज्ञेयमिदमित्यनुचिन्त्य, श्रीशङ्कराचार्यादिभिरव्याख्याता अपि काश्चिदुपनिषदः श्रीभगवद्रामानुजस्वामिपादपरम्परानिविष्टैः प्राज्ञैरभाष्यन्त। तत्र अष्टोत्तरशतोपनिषत्कोशे परिगणनायामेकादशी भवन्ती श्वेताश्वतरोपनिषत् दशोपनिषन्मुद्रणानन्तरं प्राप्तस्थानेति अन्यैरपि व्याख्यातेति च सैव प्रथमं सभाष्यममुद्रि। परस्परपार्थक्येन तत्त्वत्रयस्य चिदचिदीश्वररूपस्य व्युत्पादनविषये उपनिषदन्तराण्यतिशेते श्वेताश्वतरोपनिषदिति इमामनुपदं तत्रतत्र श्रीभगवद्रामानुजस्वामिपादा उदाजह्रुः। 'भोक्ता-भोग्यं प्रेरितारञ्च मत्वा,' 'पृथगात्मानं प्रेरितारञ्च मत्वा,' 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इत्यादीनि अद्वैतमतारुन्तुदानि वाक्यानि अत्रैव विलसन्ति। परन्तु आपातश्राविणामुपनिषदियं

रुद्रपारम्यनिरूपिकेव भासेत । सर्वव्याख्यानाधिकरणश्रुतप्रकाशिकायां सुबहु समालोड्य नारायणपारम्यैदम्पर्यमस्याः समदर्शीनि तदनुसारि भाष्यम् , तदुपरिप्रवृत्तमस्मत्परिष्कारञ्चा अवधाय पठतामपेयादेवेयं विमतिरिति नात्र किञ्चिद् विचारणीयमस्ति । अथ तथैव शिवप्रस्तावबनी अथर्वशिखा समयोजि । अथ नारायणपारम्यप्रदर्शिनी कौषीनकी । तत्र ग्रन्थाक्षरमुद्रणादिषु परित्यक्तोऽप्युपनिषद्भागः श्रीभाष्योपयुक्ततया यथोचितं परिष्कारेण सह प्राकाश्यं प्रापि । अथ प्रकृतिपुरुषेश्वरभेदप्रदर्शनेन षड्विंशतया परिगणय्य ब्रह्मादिस्थावरान्तान्तर्यामी भगवत्पदपरिभाषितो नारायण एव निरूप्यत इति मन्त्रिकोपनिषदुपादीयत।

अथ नारायणस्यैव पारम्यमन्तर्यामित्वञ्च मुक्तकण्ठं बोधयन्ती सुबालोपनिषत् । एतद्भाष्यकर्तारस्तु श्रीभाष्यादिश्रीभगवद्रामानुजस्वामिपादानुगृहीतग्रन्थरत्नविशदव्याख्यानविख्यातकीर्तयः श्रीमन्निगमान्तमहादेशिक सात्कृत स्वकृतग्रन्थस्वतनयतल्लजाः श्रीमद्वात्स्यवरदाचार्यशिष्याः श्रीवादिहंसाम्बुवाहाचार्यसतीर्थ्याः श्रीहारीतकुलतिलक श्रीवाग्विजयिसूनवः श्रीवेदव्यासापरनामधेयाः तत्रभवन्तः **श्रुतप्रकाशिकाचार्या इति प्रसिद्धाः श्रीसुदर्शनभट्टारकाः** । परन्तु भागधेयहीनानामस्माकं सुबालोपनिषदि षष्ठखण्डप्रभृति एतद्भाष्यं न कुत्राप्युपलब्धिपदमास्ते । दैवदुर्विपाकात् त्वरितमेव दिवं गतैरेभिरेतावदेव भाष्यं भाषितं भवेदित्यपि संभावनीयमस्ति । एतावता षष्ठखण्डप्रभृति भाष्यानुपलम्भमात्रेण सुबालोपनिषदपि तावत्येवेति मत्वा तदनुरूपं मुद्रणं पूर्वैः कृतमासीत् । श्रीभगवद्रामानुजस्वामिपादोदाहृतानि एतदुपनिषद्वाक्यानि सर्वाणि अव्याख्यातभाग एव सन्तीति विमृश्यान्वेषणेन सुखमेव सर्वा सुबालोपनिषदधिगता, येन निश्चितमासीत् उपनिषदियं न पञ्चखण्डात्मा, किंतु षोडशखण्डात्मेति । अत एवमभाषितानामेकादशानां खण्डानां परिष्कारमपि यथार्हं विधाय मुद्रणमिह निरवर्ति ।

अथ सुबालोपनिषदिव शुक्लयजुर्वेदनिविष्टः अग्निरहस्यनाम्नः शतपथब्राह्मणान्तर्गतस्य भागस्यैकदेशः ब्रह्मसूत्रेषु पूर्वविकल्पाधिकरणप्रवर्तितविचारतया श्रीमद्रङ्गरामानुजस्वामिवरविरचितभाष्यभूषितः समघटि । तत्रापि प्राचीनकोशे यथावस्थितं मूलपाठमनुपलब्धवतां बह्वंशभ्रंशनेन बहुत्र भाष्यमूलयोः संकरव्यतिकरादिना च अयथामुद्रणमापतितमिति यथायथं सर्वोऽप्यंशः परिष्कृतः । न केवलमेतावत् ; तदधिकरणप्रस्तुतः पूर्वापरश्रुतिसंदर्भोऽपि सौकर्याय समयोजि ।

अथ महोपनिषदादिकमकृतभाष्यमपि अस्मत्तीर्थकरसमादृतमवश्याध्येयतया संकलिनम् । परं तत्र प्राचीनाचार्यप्रदर्शितया रीत्या साम्प्रतं पाठो नोपलभ्यत इति यावदुपलब्धग्रहणेन तत्रापि विसंवादबहुलोत्तरभागोपेक्षणेन च महोपनिषन्मुद्रणं व्यधायि । तथाहि श्रीमन्निगमान्तमहादेशिकैः सच्चरित्ररक्षायां महोपनिषद्वचनानि बहून्युदाहृतानि । यथा — सुदर्शनपाञ्चजन्यधारणविधौ —

"आथर्वणमहोपनिषदि ब्रह्मसूक्ते — दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् । सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः" इति ;

"अत्र ब्रह्मसूक्तमिति महोपनिषन्मध्यगताः, 'सहस्रशीर्षा' इत्याद्या एकोनविंशतिर्मन्त्राः । तत्रोपरितना अष्टौ मन्त्राः, 'सर्वस्य वशिनम्' इत्याद्याः । तत्र, 'दक्षिणे तु भुजे' इति पञ्चमो मन्त्रः । 'एक एव नारायण' इति महोपनिषदाद्यो मन्त्रः ।" इति ;

एवं महोपनिषन्मन्त्राणां बहुपाञ्चरात्रपरिगृहीततया परमं प्रामाण्यं प्रदर्शयद्भिरुच्यते —

"अत्रापि ब्रह्मसूक्तपरमात्मसूक्ताभ्यां महोपनिषत्पठितमेकोनविंशतिमन्त्रात्मकं ब्रह्मसूक्तमेव परिगृहीतम्, शब्दतोऽर्थतश्च प्रत्यभिज्ञानात्" इति; अथ भगवद्रामानुजमुनिभिरिव भगवद्यामुनमुनि — यादवप्रकाशाचार्यतदनुयायिनारायणार्यादिभिरपि महोपनिषत् आदरेणोदाहृतेत्यदर्शि ।

तथा ऊर्ध्वपुण्ड्रधारणविधौ —

"तत्र तावत् महोपनिषदि — "धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं साङ्ख्ययोगाधिगम्यम् । ज्ञात्वा विमुच्येत नरः समस्तः संसारपाशैरिह चैव विष्णुम्" इति ;

उपरि भगवन्निवेदितोपयोगाधिकारे च,

"श्रूयते हि महोपनिषदि, विष्णुनाऽत्तमश्नन्ति; विष्णुना पीतं पिबन्ति; विष्णुना घ्रातं जिघ्रन्ति, विष्णुरसितं रसयन्ति; तस्माद् विद्वांसो विष्णुग्रस्तं भक्षयेयुः" इति ।

'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ' इति ब्रह्मसूत्रे आथर्वणिका , 'ब्रह्म दासा ब्रह्म दाशा ब्रह्मेमे कितवा उत ' इति अधीयते इति यदुक्तम् , तदिदमाथर्वणब्रह्मसूक्त इति शाङ्करसूत्रभाष्यतोऽवगम्यते । तच्च ब्रह्मसूक्तं प्रागुक्त-महोपनिषदन्तर्गतब्रह्मसूक्तम् , अन्यद्वेति विमृश्यम् । इदमेव चेत् – तदा महोपनिषदो भगवद्बादरायणपरिगृहीतत्वम् , दृश्यमानमहोपनिषदः पाठान्यथात्वञ्च स्पष्टं भवति ।

यथैवमुपनिषदाम् , तथा तत्रैव छान्दोग्यगायत्रीविद्यादौ साक्षितयोदाह्रियमाण स्वमन्त्रस्य मुद्गलोपनिषद्विष्णुपुराणभागवतादिव्याख्यातस्य सर्ववेदनिविष्टस्य सर्वैर्बहुमानितस्य सर्वैः ब्रह्मयज्ञादावनुसंधीयमानस्य श्रियःपतेः पूजने विनियुक्तस्य सर्वपापप्रशमनस्य पुरुषसूक्तस्यावश्यज्ञेयतामालक्ष्य, तत्रापि भाष्यमुपलब्धं सर्वग्रन्थानुस्यूतमङ्गलश्लोकादि-लिङ्गाभावेऽपि यथोपलम्भं श्रीरङ्गरामानुजमुनिवरविरचितमित्यभ्युपगम्य तन्मुद्रणमप्यस्मिन् उपनिषत्सम्पुटे आदृतमासीत् । तदनन्तरमौचित्याद् द्वयोपनिषदपि ॥

एवं सर्ववेदान्तग्रन्थमूलभूतानामुपनिषदां मुद्रणं यथावन्निर्वर्तितवानेष वृषशैल-विहारी विनतजनप्रत्यूहपरिहारी कलिकल्मषहारी सर्वदैवतमस्मद्दैवतं श्रीनिवास स्वचरण-नलिनसेवासाम्राज्ये सर्वमपि जनमभिषेक्तुमुद्युक्तः स्वरूपरूपगुणविभवादिसर्वपारमार्थ्य-प्रतिष्ठापनकामो भगवद्रामानुजस्वामिपादप्रवर्तित प्राचीनसमीचीनसिद्धान्तस्थापक स्वावतार-भूतकवितार्किकसिंहसर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्ताचार्यविरचितैर्विशिष्टैर्ग्रन्थरत्नैः सह प्राच्या-वाच्यप्रशस्तग्रन्थप्रकाशनादिकमप्यनुगृह्णन् अवतारसाफल्यं संपाद्य सर्वतो विजयता-मिति संप्रार्थयामहे ॥

जयतु निखिलरक्षादीक्षितः श्रीनिवासो जयतु मतमनघं लक्ष्मणार्योपदिष्टम् ।
जयतु निगमचूडादेशिकग्रन्थजातं जयतु जगदशेषं भक्तिधीवृत्तभव्यम् ॥

**उत्तमूर् - ति. वीरराघवाचार्यः**
( उभयवेदान्तग्रन्थमाला संपादकः )



श्रीः

श्रियै नमः

श्री श्रीनिवासपरब्रह्मणे नमः



श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिर्नस्तरङ्गयतु मङ्गळम् ॥

श्रीः

# शारीरके श्वेताश्वतराद्युपनिषद्वाक्यस्थलसूची

| श्वे | शा. | श्वे | शा. |
|---|---|---|---|
| १—६. | ४-१-३. | ५—८, ९. | २-३-२१. |
| २—१०. | ४-१-११. | ४—१० ; ६-१९. | १-४-२३. |
| ३—९, १०. | ३-२-७. | ३—३५ ; ५-८. | १-३-२३. |
| ४—५. | १-४-८. | | |

---

| | | | | |
|---|---|---|---|---|
| कौ. | १—९. | ३-१-१२. | ३— | २-१-२९—३२. |
| | १—३७. | ३-३-२८. | ४— | १-४-१६—१८. |
| | २—१४. | ३-३-११. | | |

---

| | | | | | |
|---|---|---|---|---|---|
| म. | १. | १-४-३. | मु. | ३. | १-४-११—१२. |

---

अग्निरहस्यम् — ३-३-४४—५०.

,, वैश्वानर — १-२-२५—३३.

,, शाण्डिल्य — ३-३-१९.

---

अत्र सूत्रेषु साक्षादगृहीतान्यपि पूर्वपक्षमुपक्षिप्ततयाऽध्यवसितानि अनेकानि वाक्यानि भाष्यानि ॥

श्रीः

# श्वेताश्वतराद्युपनिषद्गतानि ऋष्यादिनामानि



श्रीः

# श्वेताश्वतरमन्त्रसूची



## मन्त्रिकोपनिषत्—



## पुरुषसूक्तमन्त्रसूची

श्रीः

# विषयसूची



## श्वेताश्वतरोपनिषदि

ஸ்ரீ:

உபயவேதாந்தக்ரந்தமாலை

உபநிஷத்ஸாரம்

# ச்வேதாச்வதரோபநிஷத்து



உபநிஷத்துக்களில் ஈசாவாஸ்யம் முதல் பிருஹதாரண்யகம் வரையிலாம் பத்து உபநிஷத்துக்கள் த்வைதம், அத்வைதம், விசிஷ்டாத்வைதம் என்ற மூன்று மதத்தினராலும், மற்றும் பல வேதாந்திகளாலும் உரையிடப்பட்டிருக்கின்றன. வேதவ்யாஸரென்ற பாதராயண முனிவர் தமது சாரீரகசாஸ்த்ரமாகிற ப்ரம்மஸூத்ரத்தில் இந்தப் பத்து உபநிஷத்துக்களைப் போலே பிற உபநிஷத்துகளிலும் சிலவற்றைக் கையாண்டிருக்கின்றாரென்றது எல்லா மதத்தினரும் இசைந்ததேயாம். இதனை வேறிடத்தில் விளக்கியுமுள்ளோம். அவ்வண்ணமே பகவத் ராமாநுஜஸ்வாமிபாதர்களும் தமது ஸ்ரீபாஷ்யம் முதலான க்ரந்தங்களில் கையாண்டிருப்பதால் அத்தகைய உபநிஷத்துக்களுக்கும் உபநிஷத்பாஷ்யகாரர் என ப்ரஸித்தி பெற்ற ஸ்ரீரங்க ராமாநுஜஸ்வாமிகள் பாஷ்யமியற்றியுள்ளார். ஆனால் ஈசாவாஸ்யோபநிஷத்துக்கு ஸ்ரீமந்நிகமாந்தமஹாதேசிகன் அருளிச்செய்த பாஷ்யமிருப்பது போல் பத்துக்கு மேலான உபநிஷத்துக்களில் ஸுபாலோபநிஷத்திற்கு ஸ்ரீச்ருதப்ரகாசிகாசார்யர் அருளிச்செய்த பாஷ்ய மிருப்பதை நினைத்து மற்ற உபநிஷத்துக்களுக்கு மட்டுமே இவர் பாஷ்ய மிட்டருளினபடி.

அவ்வுபநிஷத்துக்களில் முதன்மையானது ச்வேதாச்வதரோபநிஷத்து. இது நூற்றெட்டு உபநிஷத்துக்களில் பதினோராம் உபநிஷத்தானபடியாலே மேலுபநிஷத்துக்களுக்கு முந்தியதாம். இதில் அத்யாயங்கள் ஆறு. சித்து, அசித்து, ஈச்வரன் என மூன்றாகத் தத்துவங்களை வகுத்ததற்கு இதுவே மூலாதாரமாம். மற்ற உபநிஷத்துக்கள் போன வழியை விட்டு இது வேறு வகையிலே அழகாகத் தத்துவத்தை உபதேசிக்கிறது. இது உபதேசிக்கும் வகையாவது:—

1. ப்ரம்மவாதிகள் பேராராய்ச்சி செய்து ப்ரம்மம் இன்னதென்பதை ஸ்தாபிக்க இழிந்தனர். நாம் பிறப்பதும், இருப்பதும், இறப்பதும், இருந்த காலம் பல தொழில்களைச்செய்வதுமா யிருப்பதற்குக் காரணமாக எல்லோருமிசைந்த ப்ரம்மமெனப்பட்ட வஸ்து யாதென ஆராய்ந்தனர். உலகில் காரணங்களாகத் தோற்றும் பலவற்றைக் கண்டு பலர் பலவிதமாகச் சொல்லுவர். காலமே காரணமென்பர் சிலர். இயற்கையென்பர் மற்றும் சிலர். முன்வினை காரணமென்பாருமுளர். திடீரென அது உண்டாகிறதென்பர் சிலர். இவ்வாறு, பஞ்சபூதங்கள், மூலப்ரக்ருதி, ஜீவன் என்றும் போன்றவற்றிலொன்றைக் கொள்வது முண்டு. இப்படி யேதேனுமொன்றை மட்டும் காரணமாகக் கூறுவது பொருந்தாது. இவை யெல்லாம் சேர்ந்து காரணமென்னில், சேர்ப்பது யார்? ஜீவாத்மாவுக்கு இவற்றை யெல்லாம் சேர்க்க சக்தியுமில்லை. அவனே ஸ்ருஷ்டி வலையிற் சிக்கி ஸுகம் போல் துக்கமும் அநுபவித்து வருவதாலே தானே தனக்கு இவ்வாறு செய்துகொண்டானென்னவொண்ணாது. இவ்வாறெல்லா மாராய்ந்து ப்ரம்மவாதிகள் ஜீவாத்மாவுக்கு மேம்பட்ட தேவாத்மாவின் சக்தியொன்று ஸத்துவ ரஜஸ்தமோ குணங்களை யுடையதாயிருக்கிறதையும், அதனையும், காலத்தையும், ஜீவாத்மாக்களையும், மற்றுமுள்ள காரணங்களையும் ஆண்டு தகுமாறு உபயோகிக்கிறான் வேறொருவனென்று மறிந்தனர்—

இந்த மூலப்ரக்ருதியென்ற நதியின் ப்ரவாஹமான ஸம்ஸார சக்ரத்திலே சுழன்றுவருகின்ற சேதநர்களான ஜீவன்கள் வேறு, இவற்றை நியமிக்கு மிறைவன் வேறென விவேகமுள்ளவன் இறைவனின் அநுக்ரஹத்திற்குப் பாத்ரமாகி மோக்ஷம் பெறுகிறான். ஆகவே சேதநன், அசேதநம், ஈச்வரனென மூன்று தத்துவங்கள் உள. எல்லாமறிந்த ஈச்வரனொருவன். அவ்வாறறிவில்லாதவரும் அஸமர்த்தர்களுமாவர் ஜீவர். அவர்களுக்கு போகத்தை யளிப்பதற்காக உள்ளது அநாதியாக ப்ரக்ருதி யென்பது. இப்படி ப்ரம்மமானது தன் நிலையிலும், சேதநர்களுக்கு அந்தர்யாமியாகவும், அசேதநங்களுக்கு அந்தர்யாமியாகவும் மூன்று விதமாயிருக்கின்றது. அதை விசதமாக அறிந்து எப்பொழுதும் அதனையே சிந்தனை செய்துகொண்டு யோகத்திலிழிந்து தத்துவத்தைக் கண்டவன் மாயையினின்று விடுபடுகிறான். அநாதியாகச் சேர்த்துழலவைத்திருக்கும் வினைகள் மாள்கின்றன. பிறவி, இறப்பு முதலான துன்

பங்கள் தொலைகின்றன. உடலினின்று பிரிந்தபோது பரமாத்மாவி னிடம் சென்று கைங்கர்ய ஸாம்ராஜ்யத்தைப் பெற்று அவனிடம் வாழ்ந்து வருகிறான். இப்படிப்பட்ட ப்ரம்மத்திற்கு மேல் ஒன்றும் இல்லை. இது அரணிக்கட்டையில் அக்னி போன்றது. எளிதிலறியவிய லாதது. ஜீவாத்மாவைக் கீழரணிக்கட்டையாகவும், ப்ரணவமென்ற மந்த்ரத்தை மேலரணியாகவும் கொண்டு த்யானம் செய்தலெனப் படும் கடைவதென்ற பெருஞ்செயலால் மறைந்துள்ள அதை க்ரம மாகக் காணவேண்டும். எள்ளில் எண்ணெய் போலவும், தயிரில் நெய் போலவும், ஆறுகளில் தண்ணீர் போலவும், அரணிக்கட்டை யில் அக்னி போலவும் ஜீவாத்மாவினுள் பரமாத்மா மறைந்திருப்ப தைத் தவம் செய்து தெரிந்துகொள்ளவேண்டும்.

2. த்யானம் செய்பவர் கர்மாநுஷ்டானத்தை விடாமற் செய்துவரவேண்டும். பரமாத்மாவிற்கு அந்தரங்கர்களின் (விஷ்வக் ஸேநர், ஆசார்யர் போன்றாரின்) அநுக்ரஹம் பெறவேண்டும். எம் பெருமானை வாயார வாழ்த்தி அவனது அருள் பெற்று அவனிடம் மனத்தைப் பதியவைக்கவேண்டும். பருக்கைக்கற்கள், மணல் முதலியன இல்லாததும், சத்தம், சைத்யம், சூடு முதலியவற்றிற்கு இடமாகாததும், மனத்துக்கு அனுகூலமாயும், மேடுபள்ள மின்றி யும், சுத்தமாயுமுள்ள காற்றில்லாக் குகை போன்ற ஓரிடத்திலே தலை, கழுத்து, மார்வு இவற்றை நன்கு நிமிர்த்தித் தகுந்த ஆஸநத் தில் வீற்றிருந்து புலன்களினின்று பொறிகளைப் பறித்து, ப்ராணுயா மங்களை ஒழுங்காகச் செய்து மனத்தை இலக்கில் நிறுத்தவேண்டும். பரப்ரம்மம் இனி 'த்யானத்தில்' தோன்றுமென்பதற்குப் பல அறி குறிகள் உண்டாம். யோகத்தினால் அக்னியைப் போன்ற உடல் பெற்றவனுக்கு, நோய், மூப்பு, இறப்பு என்பவை நெருங்கமாட்டா. உடல் இலகுவாயிருக்கும். நிறம் பெறும். குரல் செம்மை யாயிருக்கும். நறுமணமுண்டு. மூத்ரபுரீஷங்கள் குறைபடும். பளபளப்பான பிம்பம் போலும் தீபம் போலும் விளங்கின ஜீவாத் மாவினுள்ளே பரமாத்மாவைக் கண்டவன் கட்டினின்று விடப் படுகிறான். ஸர்வாந்தர்யாமியான பெருமானவன்.

3. ஸ்ருஷ்டி ஸ்திதி ஸம்ஹாரங்களைச் செய்பவன் ஒருவனே. மோக்ஷமளிப்பவன் அவனே. வேறொருவனல்லன். எல்லாவற் றையும் செய்ய வல்லமை வாய்ந்தவன். மோக்ஷத்திற்கு விரகான

அறிவையு மளிப்பவன் அவன். வினைகளை யெல்லாம் போக்கும் அவனது திவ்யமங்களவிக்ரஹமும், ஆயுதம் முதலானவையும் த்யானம் பண்ணப்படும். உள்ளும் புறமும் பரந்துள்ள அவன் புருஷஸூக்தத்தின்படி இந்த ப்ரக்ருதிமண்டலத்திற்கு மேலான இடத்திலே சூரியனைப் போன்று விளங்குபவனே யாவான். அவனுக்கு மேம்பட்ட வஸ்து ஒன்று மில்லை. அங்குள்ள அவனே இங்கெங்கும் பரந்துளன். திவ்யமங்களவிக்ரஹமுள்ள அவனுக்குப் பிணி, பசி, மூப்பு என்றாற்போன்றவை சிறிதும் கிடையா. அவ்வாறு அவனை யறியாதாரே துன்பத்துக் காளாவார். அவனே பகவானெனப்பட்ட மிக்க மங்களமானவன். மோக்ஷத்திற்கு ஸாதகமான புத்தியை விளைவிக்கும் ஸத்துவகுணத்தையும் அவனே அளிப்பான். அவனே உபாஸிப்போர்க்கு ஸுலபனாவதற்காக ஒவ்வொருவருடைய ஹ்ருதயகமலத்திலும் அந்தர்யாமிரூபத்துடன் அவதரித்துள்ளான். அவனுக்கு மேற்பட்ட ஸூக்ஷ்மவஸ்து கிடையாது. பெரிய வஸ்துவுமில்லை. அவனை யறிந்தே வீடு பெற வேண்டுமென்று ப்ரம்மவாதிகள் பணிப்பர்.

4. அக்ஷரங்களெல்லாம் அகரத்தினின்று உண்டாகிறன. அகரத்தின் பொருளான பரமாத்மாவினிடமிருந்து உலகனைத்தும் உண்டாகிறது; அவ்விடமே மறைகிறது. அவன் அனைத்துக்கும் அந்தராத்மாவானபடியாலே அனைத்துக்கும் பேரான சொற்களெல்லாம் அவன்வரையிலாகப் பொருள் பெறும். எனவே அக்னி, ஆதித்யன், சந்திரன் என்றாற்போன்ற தேவதைகளைச் சொல்லும் சொற்களும், ஸ்திரீ, புருஷன், குமரன், குமாரி, கிழவன், பக்ஷி, காலம், கடல் என்றவை முதலாக எல்லாவற்றின் பெயர்களும் அவனைச் சொல்வதாகையால், நீயே அக்னி, ஆதித்யன், ஸ்திரீ, புருஷன், காலம், கடல் என்றவாறெல்லாம் அவனை வர்ணிப்பதாம். உலகில் பல ப்ரஜைகளை ஸ்ருஷ்டி செய்வதும், ஸம்ஸாரிகளாலே அநுபவிக்கப்படுவதும், விரக்தர்களாலே விடப்படுவதுமான மூல ப்ரக்ருதிக்கும் அவன் அநதர்யாமியாவான். ஒன்றுக்கொன்று தோழமை கொண்டனவாய் அழகிய சிறகுகளும் பொருந்திய குணங்களுமுடைய பக்ஷிகள் இரண்டு ஒரு மரத்தில் தங்கியிருக்கிறன. அவற்றில் ஒன்று அத் திப்பிலிப் பழத்தைச் சுவைத்து உண்டொழிகிறது. மற்றொன்று உண்ணாதே உயர்ந்துவிளங்குகிறது. இப்படி ப்ரகிருதிக்கு வசப்பட்டு மரத்தில் தங்கி மூழ்கிக்

கிடக்கும் இந்த ஜீவாத்மா தன்னில் வேறாகத் தன்னிடம் அன்புள்ள ஸர்வேச்வரனையும் அவன் மேன்மையையும் அறிந்தானாகில் துயரற்று விளங்குவான். அவனை யறியாமே எத்தனை வேதங்களை யோதுவதும் வீணாம். அவனே மாயன். மாயையாவது மூலப்ரக்ருதி. அவனுடைய அம்சங்களே ஜீவர்கள் யாவருமாவர். தேவர்களையும் ஸ்ருஷ்டிசெய்பவன். ஹிரண்யகர்ப்பனென்ற நான்முகனைப் படைத்து அனுக்ரஹம் செய்தவனவன். எங்கு முளனாகிலும் எவ்வித தோஷமும் தட்டாதவன். இவனே ப்ரளயத்தில் இருந்தவன். ஸூர்யமண்டத்தினுள் விளங்குகின்றவன். இவனாலே நல்வழியி லிழியத் தொல்லறிவு பெறுகின்றனர். இவனும், இவனுடைய திருவுருவும் கண்ணாற் காணக்கூடா. இவனைச் சரணமடைந்து பக்தியை, வளர்த்த வேண்டும் ஐச்வர்யங்களைப் பெறலாம்.

5. ஜ்ஞானம், கர்மம் என்ற இரண்டாலும் அவனை யாராதிக்க வேண்டும். ஆராதிக்கும் ஜீவன் வேறு; ஆராதிக்கப்படும் அவன் வேறு. ஜ்ஞானத்திற் சிறந்த கபிலரைப் படைத்தவனும் அவனே. தேவதைகளும், ரிஷிகளும், பிரமனு மெல்லோரும் இந்த ப்ரம்மத்தை யறிந்தே மோக்ஷம் பெற்றனர். ஸத்துவ ரஜஸ் தமோகுணங்களுக்கு வசப்பட்டுப் பல வினைகளைச் செய்து பலன்களை யனுபவிக்க உடலும் கருவியும் கொண்டு அஹங்கார மமகாரங்களுடன் திரியும் இந்த ஜீவன் ஒவ்வொருவனும் தன் இருப்பிடமான ஹ்ருதயம் கட்டைவிரலளவாயிருப்பதனால் அங்குஷ்டமாத்ரமாய், உண்மையில் செருப்பாணியின் முனை யத்தனையாய், வால்நெல்லின் வாலின் நுனியை எண்ணற்ற பாகங்களாகப் பிரித்தால் முடிவில் இருக்கும் (பிரிக்கமுடியாத)ஒரு பிரிவவ்வளவாய் (அவயவமின்றி) அணுவாய் இருப்பன். மோக்ஷத்தில் தனது ஞானமாம் ஒளியைக்கொண்டு எங்கும் பரந்திருப்பன். இந்த ஜீவாத்மா ஆணல்லன், பெண்ணல்லன், அலியுமல்லன். எந்த உடல் பெறுகிறதோ, அதைப் பற்றி அவ்வாறு கூறப்படுகிறான். நல்வினைகளால் சிறந்த பிறவி பெறுகிறான். வேறு வினைகளின் பயனாக வேறு பிறவியாம். அத்தகைய வினைகளுக்கு அவ்வவ ஆத்மாவின் குணங்களே காரணம். அக் குணங்களுக்கு முன் வினை காரணமாம். இவற்றையெல்லாம் கொண்டு ஸர்வத்தையும் ஸ்ருஷ்டி செய்யும் பெருமானை யறிந்தார் மோக்ஷம் பெறுவர்,

6. இந்தத் தேவனை யறியாமே பலர், இயற்கையே உலகுக்குக் காரணமென்றும், காலம் காரண மென்றும், மற்றும் பலவித மாகவும் பேசிவருகின்றனர். எல்லாம் எம்பெருமானின் விபூதியாம். அவனுடைய ஸங்கல்ப்பத்தாலே பஞ்சபூதங்களும், அவற்றிற்கு முன்னும் பின்னுமான கார்யங்களும் உண்டாகின்றன. அவனுக்கு ஆராதனங்களாக எல்லாச் செயல்களையும் செய்துகொண்டு அவனுக்குத் தான் சேஷனென்பதைச் செவ்வனே யறிந்து அனுபவிக்கவேண்டு - மவற்றை யனுபவித்துவிட்டு அந்த ப்ரம்மத்தை யடைகிறான். அந்த ப்ரம்மத்தை விட ஜீவன் வேறுவான். ப்ரக்ருதி, காலம், ஜீவன் என்பவற்றிற்கு மேலாய் ப்ரபஞ்சகாரணமாய் பாவங்களைப் போக்குகின்றவனும் ஆத்மாவில் வசித்து வருபவனும் ஈச்வரர்களுக்கும் எல்லோர்க்கும் மேலான ஈச்வரனும், தேவதைகளுக்கெல்லாம் மேலான தேவதையும், ஸர்வசேஷியும், கர்மாதீனங்களான காயமும் கருவிகளு மில்லாதவனும், ஒத்தார் மிக்கார் யாருமில்லாதவனும், இயற்கையாகவே பலவகை சக்தி, அறிவு, செயல் எல்லாம் உடையனும், எல்லாவற்றையும் நியமிக்கிறவனும் ஸத்வரஜஸ்தமோகுணங்களுக்கு உட்படாதவனுமாவான் அவன். ஸாங்க்யம், யோகம் முதலான சாஸ்த்ரங்களில் கூறியபடி தன்னைப் போல் நித்யர்களும் சேதநர்களுமான பலருக்குத் தான் ஸகலபலன்களையு மளிப்பவனுமாய் கர்மயோக ஜ்ஞானயோகங்கள் வாயிலாக ஜீவாத்மாவினுள் அறியப்படுகிறவனுமான அந்த ஜகத்காரண புருஷனை யறிந்து பாசங்களினின்று விடுபடவேண்டும். சூரியன், சந்திரன், நட்சத்திரங்கள், மின்னல்கள், அக்னி போன்ற சோதிகளெல்லாம் அவனெதிரில் ஒளி பெறா. அவனது அனுக்ரஹமும், அவன் திருமேனியொளியின் உதவியும் பெற்று அவை ப்ரகாசிக்கின்றன. உலகினில் மிகச் சிறந்து விளங்கும் அன்னமது. அலைகடலில் அழிவற்றிருக்கும் அக்னியது. ஜ்ஞானம், சக்தி, பலம், ஐச்வர்யம், வீர்யம், தேசு என்ற குணங்கள் நிறைந்தவனும், ப்ரக்ருதி ஜீவர்களைக் கொண்டு, ஸ்ருஷ்டி ஸ்திதி ஸம்ஹார மோக்ஷங்களை நடத்துகின்றவனும், தனக்கு மேல் ஈச்வரனொருவ னில்லாதவனுமான இவனே பிரமனை ஸ்ருஷ்டித்து, வேதங்களையு மவனுக்கு ஓதியவன். இப்படி ஆத்மாக்களுக்கு அறிவைக் கற்பிக்கும் பரம புருஷனை முமுக்ஷுவாய் சரணமடைக. நிரவயவமானதாலே விருத்தி க்ஷயங்களைப் பெறாததாய், கர்மங்களுக்குட்படாததாய், பசி

தாகம் போன்ற துன்பங்களுக்கு இடமாகாததாய், ஆச்ரிதர்களை யுபேக்ஷிக்கும் ஸ்வபாவ மில்லாததாய், பக்ஷபாதமற்றதாய், மோக்ஷமென்ற அக்கரை சேரக் கடல் கடக்கத் தக்க திடமான அணையாயுமுள்ள இந்தப் பரதேவதையை யறியாமே மோக்ஷம் போவதென்பதை, மனிதர்கள் வானத்தைத் தோலைப் போல் சுருளாகச் சுருட்டவியன்றபோது பெறலாம். அமூர்த்தமான ஆகாயத்தைச் சுருட்டுவது கூடுமோ? அது போல் அவனை யறியாது மோக்ஷம் பெற யாருக்குமாகாது. இப்படி ச்வேதா ச்வதரரென்பவர், தபோபலத்தாலும் தெய்வ அநுக்ரஹத்தாலும் ப்ரம்மத்தை யறிந்து ரிஷிகள் திரள்திரளாகப் பரிவுடன் அறிந்து கொண்டாடும் அதைப் பரமஹம்ஸர்கள் போன்ற பலருக்கு இவ்வாறு உபதேசித்தருளினர். தெய்வத்தினிடமும், குருவினிட த்திலும் துல்யமாய்ச் சிறந்த பக்தியுள்ள மஹாத்மாவுக்கே இவ்வர்த்தங்களெல்லாம் நன்கு விளங்கும்.

ச்வேதாச்வதரோபநிஷத்து முற்றிற்று.



## அதர்வசிகோபநிஷத்து

அதர்வா என்பவரைப் பைப்பலாதர் முதலானோர் ஆச்ரயித்துக் கேட்டனர். த்யானத்திற்கு மந்த்ரம் யாது? த்யானமாவது எது? த்யானம் செய்பவன் யார்? த்யானம் செய்யப்படும் தத்துவம் யாது என்று. அதர்வாவும் உபதேசிக்கலானார்—த்யானத்திற்கு மந்த்ர மாவது ப்ரணவம். அது நான்கு பாதமுள்ளதாய் ப்ரம்மமாகும், அகார—உகார—மகாரங்களும், அவற்றின் மேல் அரை மாத்திரை யொன்று மாக நான்கு மாத்திரைகள். அவைகளே லோகங்க ளாகவும் வேதங்களாகவும் மற்றும் பல விதமாகவும் புகழப்படும். அடைவாக அவற்றிற்குத் தேவதைகளாவர் ப்ரம்மா, விஷ்ணு, ருத்ரன், புருஷன் என்பர். இந்த ப்ரணவம் ஹ்ரஸ்வம், தீர்க்கம், ப்லுதமெனவும் பிரிக்கப்படும். இதற்கு ஓங்காரம், ப்ரளயம், ப்ரணவம், தாரம், விஷ்ணு, ப்ரம்மம், ப்ரகாசம், வித்யுத், மஹா தேவன் என்றவாறு பெயர்களு முள. அப்பெயர்களுக் கேற்பப் பொருள்களும் உள. அதன் அத்தனைய மேன்மையை விளக்க

அப் பெயர்கள் ஏற்பட்டன. இந்த நான்கு மாத்ரைகளே மனிதனுக்குள்ள நான்கு தசைகளான, விழிப்பு, சொப்பனம், உறக்கம், மோக்ஷமென்றவைகளாகவும் பாவிப்பதுண்டு. இப்படிப்பட்ட இந்த ப்ரணவமே த்யானத்திற்கு ஸாதனமாம். எல்லாக் கருவிகளையும் மனத்திலே லயிக்கச் செய்து செய்யப்படும் த்யானத்தை விஷ்ணுவாக பாவிக்க வேண்டும். அதாவது, விஷ்ணு மயமாக அந்த த்யானம் ஆகவேண்டும். ஆகவே த்யானத்திற்கு அதிஷ்டான தேவதையும் அதுவேயாம். இந்திரியங்கள், ப்ராணன், மனம் எல்லாவற்றையும் அடக்கி த்யானம் செய்பவனை ருத்ரனுக பாவிக்க வேண்டும். அதாவது ஸர்வஜ்ஞனுன ருத்ரன் எம்பெருமானின் தியானத்தில் மிக்க பேர் பெற்றவன். அவன்தான் அங்ஙனமிருப்பதாக உலகத்தார் உணராதபடி தன் உருவைப் பல வேஷங்களாலே வேறுபடுத்திக் கொண்டு தன் நிலையை ஆவிஷ்காரம் செய்யாதவன். அவனைப் போல் நன்கு த்யானம் செய்கிறவனுக வேண்டும் ஒவ்வொரு உபாஸகனும். த்யானம் பண்ணப்படவேண்டும் தத்துவமெதெனில். ப்ரம்மா, விஷ்ணு, ருத்ரன் என்பவர் இந்திராதிகளைப் போலே உண்டாகின்றவரே. விஷ்ணு அவதாரபுருஷனுனபடியாலே அவனும் மூலபுருஷனும் ஒருவனே என்றுலும் ப்ரம்மாவும், ருத்ரனும் காரணமாகமாட்டார். அவர்கள் ஸ்ருஷ்டி ஸம்ஹாரங்களைச் செய்கின்றவராய் சிலவற்றிற்குக் காரணமானுலும் மூலகாரணமாகமாட்டிலர். ஆகையால் ஸர்வைச்வர்யமுள்ளவனாய் ஸர்வகாரணமாய் (முன் அரைமாத்ரையின் தேவதையாகச் சொல்லப்பட்ட) பரமபுருஷனே எல்லோருக்கும் ஸுகமளிப்பவனாய் உபாஸிக்கப்படவேண்டியவனுவன்.

அதர்வசிகை முற்றிற்று.



## கௌஷீதகி உபநிஷத்து

கார்க்யனின் பிள்ளையான சித்ரனென்ற அரசன் அருணரின் புத்ரரை யாகம் செய்விக்க வரித்தனன். அவர் தம் புதல்வனுன ச்வேதகேதுவை யனுப்பினுர். அரசன் அவனை வினவினுன், "கௌதமபுத்ரரே! என்னையோ, மற்றவரையோ யாகம் செய்வித்து அண்டவிக்கும் லோகத்தைப் பற்றிய இரஹஸ்யமேதேனும்

மிருக்கிறதா, தெரியுமா, மார்க்கம் தெரியுமோ'. என்று இவ்வினு விற்கு விடையளிக்க மாட்டாதே ச்வேதகேது தகப்பனரிடம் வந்து, 'என்ன மறுமொழி கூறுவது' என்முன். அவரும், 'ஏதோ ஸதஸ்ஸில் வேத மோதி பிறர் கொடுப்பதைக் கொண்டு ஹோமம் நடத்துகிறேம். இந்த இரஹஸ்யமறியோம். இருவருமே போய்க் கேட்போம்' என்முர். கௌதமர் அரசனிடம் வந்து வினவினுர். அரசனும் அறிவிக்கலானுன்—

'இங்கிருந்து இறந்து செல்பவர் எல்லோரும் சந்திர மண்டலமே செல்கின்றனர், அவர்களின் இந்திரியங்களைக் கொண்டு சுக்லபக்ஷத்தில் சந்திரன் விருத்தியடைகிருன். சந்திரன் ஸ்வர்க லோகவாயிலாகிருன். அவன் கேட்கும் கேள்விக்கு விடையளிப் பவனை விட்டுவிடுகிருன். அளிக்காதவனை மழை மூலமாகக் கீழே யனுப்புகிருன். புழுகு, பூச்சி, பக்ஷி, புலி, சிங்கம், மீன் போன்ற யோனிகளில் ஏங்காவது மறுபிறவி பெறுகிருனிவன்.

சந்திரன் கேட்கும் கேள்வி யாதெனில், நீ யார் என்பதாம். விடை யாதெனில், 'பஞ்சாக்நிவித்யையிற் பணித்திருக்கிறபடி ஐந்து நிலைகளைப் பெற்று சுக்ரசோணிதங்களாலே 12. 13. மாதங் களிலே பிறவியுற்றவன் யான். இனி என்னை அவ்வாருக விட வேண்டாம். ஸத்யமென்ற பகவானுலே தவத்தினுலே நான் ஸர்வ ரூபியானேன்' என்றவாரும். இவ்வாறு கூறுகின்றவனைச் சந்திரன் விட்டுவிடுகிருன். இவனும் தேவயாநமென்ற அர்ச்சிராதிமார் கத்தை யடைந்து, அக்னிலோகம் ,வாயுலோகம், வருணலோகம், ஆதித்யலோகம், இந்திரலோகம், சதுர்முகலோகம், ப்ரம்மலோகம், என்றபடி செல்லுகிருன்.

ப்ரம்மலோகத்தில் அரம் என்ற மடுவிருக்கிறது. தடியடிக்கு ஸித்தர்களாய் முஹூர்த்தர்களென்ற பெயர் பெற்றவர்கள் அங்கிருக்கிருர்கள். ஆறு விரஜை. தில்யமென்ற மரமொன்று. மதில்களிலே போர்க்கருவிகள் உள்ளதாயிருப்பதால் ஸாலஜ்ய மெனப்படும் அபராஜிதமென்ற ராஜதானியிருக்கிறது. இந்த்ரன் ப்ரஜாபதியென்ற த்வாரபாலகர் இருவர். விஸ்தாரமாயிருப்ப தாலே ப்ரபுவிமிதமென்றும் விபுப்ரமிதமென்றும் ஓதப்பட்ட மண்டபமுண்டு. விசக்ஷணையென்னும் பீடமிருக்கிறது. அளவற்ற சோதியையுடையதாலே அமிதௌஜஸ் எனப்படும் கட்டிலொன்று.

மனத்தையும் கண்களையும் வசப்படுத்தும் தேவிகள் முறையே ப்ரியையென்னும் ப்ரதிருபையென்னும் இருவர் புஷ்பங்களைப் பறிக்கா நிற்பர்கள். மற்றும் எண்ணற்ற ஸ்த்ரீ ரத்னங்கள் விளங்குகின்றனர். அத்தகைய ப்ரம்மலோகத்திற்கு முமுக்ஷு செல்லுகிறான்.

பகவானும், 'நமது புகழாலே விரஜையாற்றுக்கு வந்து விட்டான். விரைவிற்செல்லுங்கோள்' என்று உத்தரவிடுகிறான். ஐந்நூறு திவ்யாப்ஸரஸ்ஸுக்கள் எதிர்கொள்ள ஓடிவருகின்றனர்; கையில் மாலையைக் கொண்டு வருகிறவர் நூறு, மை கொண்டு வருபர் நூறு, கந்தப் பொடி, பட்டுவஸ்திரம், பூஷணம் இவற்றி லொவ்வொரு வகைக்கு ஒவ்வொரு நூறுபேர். வந்து ப்ரம்மாலங் காரத்தாலே அலங்காரம் செய்கின்றனர். பிறகே ப்ரம்மத்தை யறிந்தவன் பிரம்மத்தினிடம் மரியாதையாகச் செல்லுகிறான். அர்ச்சிராதி மார்கத்தால் வந்த முக்தன் அரமென்ற மடுவை ஸங்கற் பமாத்திரத்தால் கடந்து, தடியோங்கி நிற்கும் மூஹூர்த்தரென்பவர் தாங்களே விலக விரஜையாறு கிட்டி அதையும் ஸங்கல்பத்தாலே கடக்கிறான். இவன் சரீரத்தை விட்டு, ஸுக்ரதங்களை சிநேகிதரும், பாபங்களைப் பிறரும், சொத்தைப் புத்ரனும் பெறலாயிருக்கப் புண்ணியம் பாபமென்றவற்றை உதறிவிட்டானகையாலே ப்ரம்மத் தயே பெற வருகிறான்.

அவன் தில்யமென்ற மரத்தை யணுகினபோது ப்ரம்மத்தின் மணம் இவனுடலுக்கேற்படுகிறது. ஸாலஜ்யமென்ற ஸம்ஸ்தா னத்திற்கு வந்தபோது ப்ரம்மத்தின் திருமேனியின் சுவை இவனுட லுக்குச் சேருகிறது. அபராஜிதமென்ற அரண்மனையிற் புகுந்த தும் ப்ரம்மதேஜஸ்ஸு இவனிடம் புகுகிறது. பிறகு இந்த்ரன், ப்ரஜாபதி என்ற த்வாரபாலகர்கள் இருவரின் அருகில் வருகிறான். அவர்கள் இவனைக் கண்டதும் அப்பால் விலகுகின்றனர். விபுப்ர மிதமென்ற மண்டபத்தினருகிற் சென்றதும் ப்ரம்மயசஸ்ஸு இவ னுக்குச் சேருகிறது. விசக்ஷணை யென்ற பீடத்திற்கு நெருங் கின போது ப்ரக்ஞை பரவுகிறது. அமிதௌஜஸ் என்ற பள்ளியில் வீற்றிருக்கும் பெருமானைப் பெற அங்கே அடிவைத்தேறுகிறான். நீ யாரென்று பெருமான் கேட்கப் பின் வருமாறு விடையை விண்ணப்பம் செய்கிறான், — ஸ்வர்க லோகத்தினின்று ஆக்ரயம,

வாயு, மேகம் முதலான வழியாலே கீழ் இறங்கி எத்தனையோ பூதங்களாகப் பிறந்தவன் யான். தேவரீர் எல்லா பூதங்களுக்கும் எனக்கும் ஆத்மா. ஸத்யமெனப் படுகிறவர். ஸத், த்யம் என இரு வகையாம் ப்ரபஞ்சத்திற்கு ஆத்மா. ஸர்வவேதமயர். மனோ வாக்காயங்களையும் மற்ற கருவிகளையும் கொண்டு, ஆண், பெண். அலியென்ற பலவுருவெடுத்துக் கருவிக்குத் தக்க அறிவைப் பெற்றிருந்தேன். தேஹம், இந்திரியம், மனம், ப்ராணன், அறிவு எனப் படும் வஸ்துக்களை விட வேறானவன் யான். தேவரை ஆத்மாவாக உடையவன். தேவருக்கே சேஷபூதன்' என்றவாறு. பிறகு எம்பெருமானும் தனக்கு அனுபவத்திற்கு இருக்கும் உலகை இவனுக்குமாக அநுக்ரஹிக்கிறான்.

இங்ஙனம் பர்யங்கவித்யையில் ஓதினபடி எம்பருமானை உபாஸிப்பவர் இங்ஙனமே அவனைப் பெறுவர்.

2. இரண்டாம் அத்யாயத்தில் கௌஷீதகி முதலான மஹர்ஷிகள் அறிவிக்கும் உபாஸனங்கள் ப்ராணவாயு விஷயமாக ஓதப்படுவதோடு ப்ராணனுக்கு மற்ற இந்திரியங்களைக் காட்டிலும் மேன்மை யதிகமென்பதை அவைகளுக்கு உண்டான கலஹமொன்றைக் கூறி வெளியிடுகிறது. இக்கலஹம் ப்ருஹதாரண்யகம் முதலானவிடங்களிலும் கண்டதேயாம்.

3. இதில் ப்ரதர்தநவித்தயை விவரிக்கபடுகிறது. திவோதாஸனின் மகன் ப்ரதர்தனனென்பவன் பராக்கிரமசாலியாயிருந்ததால் இந்திரனுக்குப் போரில் ஸஹாயம் செய்ய நேர்ந்தது காரணமாக இந்திரனுக்கு ப்ரியமான இடத்திற்கு (ஸ்வர்கலோகத்திற்கு) சென்றான். இந்திரனும் அவன் செயலுக்கு ஸந்தோஷித்து, 'வரன் கொடுக்கிறேன், கேள்' என்றான். ப்ரதர்தனன்— 'மனிதனுக்கு எது மிகவும் ஹிதமாகுமோ அந்த வரனை நீயே எனக்காக ஆராய்ந்து அளி' என்றான். இந்திரன், 'ஒருவருக்கு வேண்டுவதை வேறொருவர் வரிப்பது எங்ஙனம்? நீயே இன்னதென்று தெளிவாக வரி' என்றான். ப்ரதர்தனன், 'ஆகில், நான் கேட்டபடி நீ அளிக்கவில்லையாகில் எனக்கு வரன் கொடுத்ததாகாதே' என்றான். எனவே ஸத்யத்தினின்று விலகாத இந்திரன் அவனுக்கு உபதேசிக்கலானான்.—'என்னையே உபாஸனம் செய். என்னை யுபாஸிப்பதே மனிதனுக்கு மிக்க ஹிததமமென நினைக்கிறேன்; முத்தலையனை

த்வஷ்டாவின் மகனைக் கொன்றேன், வேதமோதாதவரான சந்யாஸிகளைச் செந்நாய்களுக்களித்தேன். பல ப்ரதிக்ஞைகளை மீறி மேலுலகிலிருந்த ப்ரஹ்லாத புத்ரர்களையும், ஆகாயத்தில் பௌலோமர்களையும், பூவுலகில் காலகஞ்சர்களையும் தொலைத்தேன். அப்படிப்பட்ட எனக்கு அதனால் ஒரு மயிரும் போனதில்லை. என்னை யுபாஸிப்பவனுக்கு, மாத்ருஹத்தி, பித்ருஹத்தி, களவு, கர்பஹத்தி போன்ற எக் கர்மாவினாலும் பலன் கெடாது. பாவம் செய்ததற்காக முகம் கறுக்காது; நான் ப்ராணன், ப்ரஜ்ஞாத்மா, அப்படிப்பட்ட என்னை ஆயுஸ் என்றும் அம்ருதமென்றும் உபாஸனம் செய். ப்ராணனே ஆயுள்; ப்ராணனே அமுதம். ஏனெனில், உடலில் ப்ராணன் உள்ளவரையிலே ஆயுள் இருப்பது. ப்ராணனாலேயே மேலுலகில் அழிவற்றமையை அடைவது. ப்ரஜ்ஞாத்மாவென்று உபாஸித்தலால் ஸத்யஸங்கல்பனாகிறான். ஆயுள் என்றும், அம்ருதமென்றும் உபாஸிப்பதாலே இவ்வுலகில் முழுவாயுளைப் பெற்றுப் பிறகு ஸ்வர்கலோகத்தில் அழியாமலும் விளங்குகிறான்.

ஒரே ஸமயத்தில் வாக்கினால் பேசவும், கண்ணாற் காணவும், காதாற் கேட்கவும், மனத்தினால் த்யானிக்கவும்,—இப்படி எல்லாக் கருவிகளின் கார்யங்களை ஒரே ஸமயத்தில் செய்ய—மாட்டிலோமாகையாலே எல்லா இந்திரியங்களும் ஒவ்வொரு இந்திரியத்தின் கார்யத்திலும் ஒன்று சேருகின்றன வென்பர் சிலர். ஒரே ஸமயத்தில் எல்லாம் வேலை செய்யமாட்டாவென்பது திண்ணம். ப்ராணன்கள் எனப்படும் ப்ராணவாயு, இந்திரியங்களென்பவற்றிலே ப்ராணவாயுவுக்கு மேன்மையை யாராய்ந்து யுக்தப்படி கொள்க. எங்ஙனமெனில், ஊமை, குருடன், செவிடன், கை போனவன், ஹ்ருதயம் சிதறினவன்போன்றார் ஜீவித்திருப்பதைக் காணும்போது வாக்கு, கண், காது போன்ற கருவிகளற்றவர்களும் ஜீவிப்பார்களென்பது கண்கூடு. ப்ராணவாயு புறப்பட்டு விட்டால் ஒரு நொடி கூட ஜீவிக்க மாட்டிலோம். ஆகையால் அதுவே உயர்ந்தது. அதுவே எல்லா இந்திரியங்களிலும் வியாபித்து அதன் மூலம் எல்லாம் செய்விக்கிறது. ஆனால் ஜீவாத்மாவுக்கு ப்ராதான்யமென்னலாம். அதுவுமுண்டு. ப்ராணனே ப்ரஜ்ஞை யென்னலாம். ப்ரஜ்ஞையே ப்ராணன். அதாவது இரண்டும் சேர்ந்தே இருக்கும்; சேர்ந்தே கிளம்பிவிடும். உறங்கும்போது எல்லாம் லயித்துவிடுகின்றன. ப்ராணன் மட்டும் ச்வாஸமாக ஸஞ்சரித்துக்

கொண்டிருக்கிறது. மூர்ச்சையிலும் இவ்வாறு ஸூக்ஷ்மமாய் ப்ராணஸஞ்சாரமுண்டென்க. ப்ரஜ்ஞை யென்ற ஜீவனில்லாத போது ஓரிந்திரியமும் தன் வேலையை நடத்தவியலாது. எனவே விஷயங்களையும் அவற்றை அறியக் கருவிகளான இந்திரியங்களையும் ப்ராணனையும் விட வேருய், ஜ்ஞாதாவும் கர்த்தாவும் போக்தாவு மாவான் ஜீவன். வண்டியின் வட்டைகள் இலைகளிலும், இலைகள் குடத்திலும் பதிய வைக்கப்பட்டிருப்பது போல் அசேதனங்க ளெல்லாம் சேதநங்களிடமும், சேதநங்கள் ஸர்வப்ராணனை பரமாத்மாவினிடமும் அவன்தன்னுலே பதியவைக்கப்பட்டிருக்கிற னவெ வறிக.

இப்படி ப்ராணனும் ப்ரஜ்ஞாத்மாவுமான அவன் ஆனந்த ஸ்வரூபன் ; மூப்பு, இறப்பு இல்லாதவன் ; நல்வினைகள் செய்ததால் சிறப்பையடையவேண்டியவனுமல்லன் ; தீவினைகளால் குறை படுகிறவனுமல்லன். யாவனொருவனை இவ்வுலகுகளினின்று உய் விக்கக் கருதுகின்ருன், அவனை நல்வினையில் மூட்டுகிருன் ; கீழே தள்ளி வைக்கக் கருதப்பட்டவனைத் தீவினைகளில் மூளச் செய் கிருன். இவனே உலகினைக் காப்பவன் ; உலகுக்கு எசமான் ; உலகினை நியமிக்கின்றவன். இப்படிப்பட்டவனை எனக்கும் ஆத்மாவாக உபாஸனம் செய்யவேண்டும்'.

இவ்வாறு ப்ரதர்தனனுக்கு இந்திரன் உபதேசித்த ப்ரதநவித்யை யித்துவாம்.

4. பாலாகி என்ற பிராம்மணன் ஸாங்க வேதாத்யயநம் செய்து சிறந்த ப்ரக்யாதி பெற்றிருந்தான். உசீநரம், ஸத்துவகுணம் நிறைந்த மத்ஸ்யதேசம் இவற்றிலும், குரு பஞ்சால காசி விதேஹ தேசங்களிலும் வஸித்துவந்தான். காசிராஜனை அஜாதசத்ரு என்பானிடம் வந்து, உமக்கு ப்ரம்மத்தைப் பற்றிச் சொல்லுகிறே னென்று சொன்னுன். அஜாதசத்ரு, 'இந்த வார்த்தைக்கே உமக்கு ஆயிரம் பசுக்களை தானம் செய்கிறேன். ஜநகர் ஜநகர் என்றன்ரே எல்லோரும் ஓடுவது' என்ருன். பிறகு பாலாகி, ஆதித்யனிடமுள்ள புருஷனை நான் உபாஸிக்கிறேனென்ருன். அஜாதசத்ரு, 'இது விஷயத்தில் உமக்கு என்னிடம் ஸம்வாதம் பெற முடியாது. இது ப்ரம்மமன்று. ஆதித்ய புருஷனிவன்; வெண்மை நிறமான கிரணங்களாம் வஸ்திரமுடையவன் ; ஸர்வ ப்ராணி

களுக்கும் சிரஸ்ஸு; எல்லாவற்றிற்கும் மேலுள்ளதாய் அதிஷ்டா: எனப்பட்ட இவனை யானு முபாஸிக்கிறேன் என்ருன். இவ்வாறே சந்திரன், மின்னல், இடிக்கும் மேகம், ஆகாயம், வாயு, அக்னி, தண்ணீர், கண்ணுடி, ப்ரதித்வனி, ப்ரதிவார்த்தை, நிழல், சரீர புருஷன், சொப்பனம் காண்பவன், வலக்கண்ணிலிருப்பவன், இடதுகண்ணிலிருப்பவன் என்ற பல புருஷர்களை மேன்மேல் சொல்லிவந்தான் பாலாகி. அப்பப்போது ஒவ்வொன்றையும், 'இதுவும் ப்ரம்மமன்று' என்றே மறுத்து வந்தான் அஜாதசத்ரு என்ற அரசன். மேல் ஒன்றும் சொல்ல மாட்டாதே பாலாகி ஓய்ந் தொழிந்தான். இவ்வளவு தானே பாலகீ! என்ருனரசன். ஆமென் ருனவன். அதன்மேல், 'இவை எல்லாம் ப்ரம்மமாகா. இந்தப் புருஷர்களுக்கெல்லாம் கர்தாவாவான், அவ்வளவே யென்ன? இவ்வுலகு முழுதும் எவனுல் படைக்கப்பட்டதோ அவனே ப்ரம்ம மெனப்படுகிறவன், உபாஸிக்கப்படவேண்டியவன்' என்ருன் அரசன். அப்போது மரியாதையுடன் அவனை ஆசிரியனுக வரித்து ப்ரம்மவித்யையைப் பெற முயன்ருன் பாலாகி. அரசனும், முறை தவருக நடக்கக்கூடாதென்று சொல்லி க்ஷத்திரியனுன தான் அந்தணனுன பாலாகிக்கு ஆசிரியனு யிராமலே உபதேசிக்க இசைந்து அவனைக் கையில் பிடித்துக்கொண்டு உறங்கிக்கொண் டிருக்கும் ஒரு புருஷனிடம் சென்ருன். 'பெரியோனே! வெள்ளை வஸ்திரமணிந்தவனே! ஸோமராஜனே!' என்று உறங்குகின்றவனை அழைத்தான். அவன் எழுந்திருக்கவில்லை. ச்வாஸ ப்ரச்வாஸங் களாக இருக்கும் ப்ராணவாயுவே ஆத்மாவாயிருந்தால் அழைத்த நிமிஷத்திலேயே எழுந்திருக்கலாமே. ஆகவே ப்ராணனே ஆத்மா வன்றென இதனுலறிவித்து, பிறகுத் தடியினுல் தட்டி எழுப் பினுன். உறங்கினவனும் எழுந்தான். அஜாதசத்ரு, 'இந்தப் புருஷன் எங்கே படுத்திருந்தான்? எங்கே உறங்கினுன்? எங்கிருந்து வந்தான், தெரியுமோ? என்ருன், பாலாகி அறிந்தானில்லை. பிறகு அரசன், 'ஹ்ருதயத்திலுள்ள புரீதத் என்ற மாம்ஸபிண்டத் திற்குப் போய்ச் சேரும் ஹிதை என்ற நாடிகள், ஒரு மயிரை ஆயிர மாகப் பிரித்தாலாகுமத்தனை ஸூக்ஷ்மங்கள், பல நிறமான உதிரம் நிறைந்து உள. அங்கே சொப்பனமனுபவிக்கும்போது இருப்பான். நன்ருக உறங்கும்போது எல்லா இந்திரியங்களும் விஷயாநுபவத் தினின்று விலகி ப்ராணவாயுவை ஏவி வரும் எம்பெருமானிடம்

**क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः।**
**तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः ॥ १०**

विषयीकरोति, तदा **ब्रह्म** भवति = मुक्तो भवतीत्यर्थः। एवमेव **व्यासार्यैः,** "चमसवदविशेषात्" इत्यत्र व्याख्यातम्। ब्रह्ममिति छान्दसं रूपम्। (९)

**संयुक्त**मिति मन्त्रनिर्दिष्टक्षराक्षरशब्दार्थं विवृण्वन् परस्परवैलक्षण्यज्ञानमात्रेण मुक्तौ, मननिदिध्यासनवैयर्थ्यमिति शङ्काञ्च शमयति **क्षरं प्रधान**मित्यादिना। 'प्रधानं प्रकृतिः स्त्रिया' मिति **प्रधान**शब्दिता प्रकृतिः **क्षर** मित्युच्यते। भोग्यमात्मनो भोगार्थं हरतीति **हरो** जीवः। सः **अमृताक्षरम्**। अमृतत्वात् = मरणधर्मशून्यत्वादक्षरमित्यर्थः। **क्षरात्मानौ — एकः**। क्षराक्षरशब्दितचेतनाचेतनवर्गेशिता, 'अपहतपाप्मा दिव्यो देव एको नारायणः' इति निर्दिष्टो नारायण इत्यर्थः। **तस्याभिध्यानादिति**। **अभिध्यान**मारम्भणसंशीलनम्। **योजनं** योगः। **तत्त्वभावः** तत्त्वाविर्भावः। एतैः **अन्ते** शरीरावसाने भूयः समस्तप्रकृतिसंबन्ध-

---

कारो मुक्तये स्यात्, न तु त्रयस्येति चेन्न — चेतनाचेतनविलक्षणत्वेन परमात्मोपासने तयोरपि ध्यानविषयीकारो भवतीति तात्पर्यात्। प्रसिद्धश्चोपासात्रैविध्यमपि। इन्द्रप्राणाधिकरणे च **टीकायां** 'भोक्ता भोग्य' मिति वाक्यं गृहीत्वा त्रिविधोपासनं दर्शितम्। **ब्रह्म भवती**ति। **त्रयं** त्रिविधं ब्रह्म यदा विन्दते, **एतत्** तदा मुच्यते सर्वपाशैरिति पूर्वमन्त्रान्वयापेक्षयेदं युक्तम्। (९)

उक्तमेव त्रयवेदनं विशदीक्रियते **क्षर**मिति मन्त्रेण। त्रयवेदनमित्यनेन ब्रह्मण इव प्रकृत्यादेरपि पार्थक्येन स्वातन्त्र्येण वेदनं मुक्तिहेतुरिति नोच्यते, किंतु प्रकृतिपुरुषेशितृत्वेन परमात्मवेदनमेव त्रयवेदनं नाम। तथा वेदनमपि न श्रवणादिमात्रम्, किंतु तत्त्वभावरूपं दर्शनसमानाकारपर्यवसन्नमित्युक्तं भवति। **क्षरमक्षरञ्चे**ति प्रागुक्तक्षराक्षरविवरणं क्रियते **क्षर**मिति। **अमृताक्षर**मिति। प्रधानमपि क्वचिदक्षरमिति व्यपदिश्यते। क्षरणं चेतनाचेतनसाधारणम्; मरणं चेतन एव व्यवह्रियमाणं लोके। तद् द्वयं वस्तुगत्या चेतनस्य नास्तीति अमृताक्षरत्वमस्य। अमृतवत् स्वयमेव भोग्यम् अमृतभूतपरमात्मसंबन्धि च सदपीदमक्षरं हन्त क्षुद्रमन्यद् भोगाय हरतीति चानुतप्यते। अत्र **हर** इत्यस्य रुद्रपरतया देव एक इत्यत्र नान्वयः, व्यवहितत्वात् अमृताक्षरशब्दस्यैकस्योद्देश्यविधेयोभयासमर्पकत्वाच्चेति १३-२. **तात्पर्यचन्द्रिकायामुक्तम्।** अभिध्यानादिपदानामर्थः **चमसाधिकरणटीकायामुक्त** एव। **आरम्भणसंशीलन**मिति पाठेऽपि आलम्बनसंशीलनमित्येवार्थः। आरभ्यते (रलयोरभेदात्) आलभ्यते स्पृश्यत इति आरम्भणमालम्बनम्। योगाद् व्युत्थितस्यापि अनवरतं चित्तालम्बनभूतध्येयवस्तुपरिशीलनं योगकाले अविच्छिन्नानुसंधाने उपयुज्यते। तत्त्वाविर्भावो नाम दर्शनसमानाकारं ज्ञानम्। तत्त्वे

**ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।**
**तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥ ११ ॥**

---

निवृत्तिरित्यर्थः । ततश्च **त्वयं यदा विन्दते ब्रह्ममेत**दिति मन्त्रोक्ता मुक्तिः ब्रह्मोपासनकालीनब्रह्मानुभवरूपेत्यर्थः । ( १० )

ज्ञानसाध्यमुक्तिक्रमं दर्शयति **ज्ञात्वे**ति । दर्शनसमानाकारज्ञानेन विषयीकृत्य **सर्वपाश**शब्दितपापहानिर्भवति । "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति सूत्रे दर्शनसमानाकारज्ञानारम्भसमये पूर्वोत्तरपुण्यापुण्यकर्मणाम्, 'उपासनावसाने क्षमिष्ये' इति भगवत्संकल्परूपाश्लेषविनाशौ भवत इत्युक्तेः । क्षीणैः क्लेशसाधनशरीरेन्द्रियादिभिः सह जन्ममृत्युप्रापककर्मणाम्, 'क्षान्त'मिति संकल्परूपा प्रकृष्टा हानिर्भवति । "सांपराये तर्तव्याभावात् —" इत्यत्र सकलपुण्यापुण्यकर्मणां पूर्वं दर्शनसमानाकारज्ञानारम्भसमये, क्षमिष्य इति भगवत्संकल्परूपाश्लेषविनाशवतां क्षान्तमिति संकल्परूपप्रकृष्टहान्यभ्युपगमात् । तस्याभिध्यानपरमफलीभूतमपहतपाप्मत्वादिलक्षणं विश्वातिशायि तृतीयमैश्वर्यं तु प्राकृतदेहभिन्नशुद्धसत्त्वमयदेहभेदे भवति । **केवलः** प्रकृतिसंबन्धविनिर्मुक्त एव देशविशेषविशिष्टं ब्रह्म प्राप्य आप्तकामो[1] भवति ; न तु प्रकृतिमण्डले इति भावः । ( ११ )

1. आत्मकामः क.

---

भावः आस्था **तत्त्वभाव** इत्यर्थेन भक्तिरूपापन्नत्वमपि गम्येत । अत्र पञ्चम्यन्तत्रयोक्तेषु पूर्वपूर्वस्योत्तरोत्तरहेतुत्वमस्ति । एवम्भूतज्ञानात् प्रथमं मायानिवृत्तिः ; भूयश्च **अन्ते** शरीरावसाने अन्तिमप्रत्ययकाले तत एव दर्शनात्मकध्यानात् अन्या मायानिवृत्तिरिति । अयमर्थ उत्तरमन्त्रे स्पष्टं भाषिष्यते । (१०)

ज्ञात्वेति ज्ञानं पूर्वोक्तः तत्त्वभावः । **हानिः** हानं पुरुषक्रिया । तत् सुकृतदुष्कृते धूनुते इतिवत् । तस्याः ज्ञानसमानकर्तृकत्वात् क्त्वाप्रत्यय उपपद्यते । **देहभेदे** देहविशेषे । 'अत्र ब्रह्म समश्नुत' इति श्रुत्या सोऽश्नुते सर्वान् कामानिहैवेति न मन्तव्यमित्युपदिश्यते **केवल आप्तकाम** इति । केवलोद्देशेन आप्तकामत्वविधायकं पृथग्वाक्यमिदम् ।

अत्र मन्त्रेऽयमर्थः स्वरसतः प्रतीयते — पूर्वोक्तात् दर्शनसमानाकारध्यानात् सर्वपापहानौ तत्साध्यानां क्लेशानां क्षीणत्वादननुभाव्यत्वात् तदर्थजननमरणरूपबन्धहीनो भवति पुरुषः । **प्रहाणि**रित्यत्र प्रशब्देन प्रलयकालिकजन्ममृत्युहानिविलक्षणं पुनर्जन्मादिप्रागभावासमानकालिकत्वविशिष्टं जन्ममृत्युहानं ज्ञाप्यते । तदयं पाप्मजन्मजरामरणादिवर्जितत्वात् केवल एव ।

**एतत् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ।**
**भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १२ ॥**

---

**एतत् ज्ञेयं — किञ्चित् ।** एवम्भूतं परं ब्रह्म आत्मन्यन्तर्यामितया संस्थितं ज्ञेयम् । ज्ञातवतश्च ज्ञातव्यान्तरं नावशिष्यते । **भोक्ता — ब्रह्म मेतत् ।** 'भोक्तृशरीरकत्वं भोग्यशरीरकत्वमपहतपाप्मत्वादिविशिष्टसत्यज्ञानादि-स्वरूपत्वमिति विधात्रयविशिष्टं ब्रह्म ज्ञातव्यम्' इति **वेदार्थसंग्रहे** वर्णितम् । केचित्तु, 'भोक्ता भोग्यं प्रेरितेत्येतत् त्रिविधं प्रोक्तमेतत् सर्वं मत्वा ब्रह्म भवति =

---

अथाप्यस्य विश्वात्मकब्रह्मसायुज्यरूपं भोगसाम्यमप्राकृतदेहप्राप्तया परमपदे भगवत्पदपद्मसंश्रय-समनन्तरमेव । देहवियोगकाल एव प्राकृतभोगहेतुसर्वकर्मक्षयेऽपि स्यात् धीसंकोचमात्रस्थिति-कृदनुगतः सूक्ष्मसंस्कारयोगः । तद्भङ्गरूपे तस्मिन् सायुज्ये सति पुरुषोऽयं सत्यकामः सत्य-संकल्पश्चाप्तकामो भवति । एवञ्चेमं तृतीयं विश्वैश्वर्यरूपं विशेषमविदुषामयथाभूतवेदान्तिनां केवले केवलभावे निःश्रेयसविश्रमणं न श्रेय इति । तथाच ब्रह्मवेदनपर्वक्रमः पूर्वमन्त्रोक्तः ; तत्फलपर्व-क्रम इह विशदमुच्यते, यद् **भूयश्चान्त** इति प्राक् संगृहीतमिति । सर्वमिदं भाष्यसंमतमेव । परंतु पूर्वार्धे पापहानावुक्तायां तत्कार्यहानेरर्थसिद्धत्वात्, 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरो-त्तरापाये तदनन्तरापायादपवर्ग' इति रीत्या कार्यपरम्पराकथनस्य प्रकृते व्यर्थत्वात् पापहानस्य ध्यानप्रारम्भ – अवसानदशाभेदेन स्थितं द्वैविध्यं युक्तमिह वक्तुमिति तथा भाषितम् । (११)

**विश्वैश्वर्य**मित्युक्त्या स्यात् जगद्व्यापारादिरूपमैश्वर्यमप्यस्य । तथाच सर्वप्रकारं परम साम्यमिति वा परमात्मैक्यं वा न मन्तव्यमित्युपदिश्यते **एत**दित्यादिना । **नित्यमेवात्म-संस्थ**मिति । जीवात्मनो देवात्मनश्च शरीरात्मभावरूपः संबन्धोऽनपायी । अतोऽयं तदाऽपि तदधीन एवेति नास्य तदैक्यं तदत्यन्तसर्वप्रकारसाम्यं वेति भावः । एवञ्च विश्वैश्वर्यं नाम भाष्योक्तरीत्या विश्वातिशायि प्राकृतप्रपञ्चातिशयितमैश्वर्यम्; यद्वा **विश्वं** समस्तम् जीवेन यावत् संपादयितुं शक्यम्, तावदैश्वर्यमित्यस्तु । नन्वियं सगुणावस्था । निर्गुणावस्थायां तु स्यादैक्यमित्यपि नेति ज्ञाप्यते **नातः परं वेदितव्यं हि किञ्चि**दिति । एवञ्च अचेतनशरीरकत्ववत् चेतन-शरीरकत्वमपि ब्रह्मणः सार्वकालिकमिति प्रदर्शनपूर्वं निगम्यते **भोक्ते**त्यादिना । **वेदार्थसंग्रह** इति । तत्रेयं सूक्तिः, "एवम्भूतभोक्तृभोग्ययोरन्तर्यामिरूपेणावस्थानम्, स्वरूपेण चापरिमित-गुणौघाश्रयत्वेनावस्थानमिति परस्य ब्रह्मणः त्रिविधावस्थानं ज्ञातव्यमित्यर्थः" इति । **केचित्त्व**िति । ननु **मत्वे**त्यस्य मन्तव्यं=ज्ञातव्यमित्यर्थाश्रयणायोगात्, '**ब्रह्ममेतत्**' इति पूर्वत्र, 'ब्रह्म भवती' ति टीकायां व्याख्यातत्वाच्च तथैवेहापि **ब्रह्ममेत**दित्यस्य व्याख्यानसंभवात् वेदार्थसंग्रहस्यापि केचिदुदित एवार्थे तात्पर्यं किं न स्यात् । अतः पक्षान्तरतया निर्देशः कुत इति चेत्—उच्यते—

**वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः ।**

---

मुक्तो भवतीत्यर्थः । इत्युपसंहारः ' इति वदन्ति । प्रेरितेति वक्तव्ये **प्रेरितार**मिति छान्दसं रूपम् । ( १२ )

ननु, ' एतत् ज्ञेयं नित्यमेवात्मसंस्थ ' मिति अनुपपन्नम् । आत्मसंस्थस्य परस्यानुपलम्भात् इत्याशङ्क्य, यथा अरणिगतस्य वह्नेः प्रत्यक्षेणानुपलम्भेऽपि मथने धूमोपलम्भात् न तत्सत्ता अपह्नवार्हा — एवं प्रत्यक्षाद्यग्राह्यस्याप्यात्मसंस्थस्य परमात्मनः प्रणवनिर्मथने उपलभ्यमानत्वात् न तत्सत्ता अपह्नवार्हेत्याह **वह्नेरि**ति । **योनिगतस्य** कारणभूतारणिगतस्य **मूर्तिः** स्वरूपं प्रत्यक्षेण न **दृश्यते** [1] । लिङ्गं तु दृश्यते । पश्चात्

1. न गृह्यते । लिङ्गं तु पश्चात्.

---

वेदार्थसंग्रहव्याख्यायां **तात्पर्यदीपिकाया**मत्र संदर्भे, ' सद्वारकमाकारद्वयमद्वारक एक आकारश्चेति ह्म त्रिविधम्–तत्तदन्तर्यामितयावस्थानं स्वरूपेणावस्थानं चेति त्रिविधम् ' इत्येतावन्मात्रोक्तावपि त्र, " भोक्तृभोग्यनियन्तॄन् ज्ञात्वा त्रिविधमेतद् ब्रह्म सर्वं मयोक्तम् " इति तात्पर्यस्य र्णितत्वात् तदपेक्षया कैश्चिदुक्तं पक्षान्तरमेवेति । **प्रेरितेति वक्तव्ये** इति । शङ्करभाष्यगति-रप्येवमेव । प्रथमयोजनायां तु **भोक्ते**त्यस्य भोक्तारमित्यर्थः । इतः परं बहुग्रन्थेनोपदेशस्य करिष्यमाणत्वेऽपि **सर्वं** तत् उक्तार्थविवरणमात्रमिति **सर्वं प्रोक्त**मित्युक्तिः संगच्छते । अत एवैतदध्यायान्ते द्विरुक्तिर्दृश्यते । द्वितीययोजनायां ' मत्वा ', ' ब्रह्ममेतत् इत्यनयोः, ' पृथगात्मानं प्रेरितारञ्च मत्वा ', ' त्रयं यदा विन्दते ब्रह्ममेतत् इति पूर्वमन्त्रसमानार्थत्वलाभः । इन्द्रप्राणाधिकरणटीकायां तु **मत्वे**त्यस्योपासनपरत्वमभिमतम् । अत्र **प्रेरितार**ञ्च मत्वा अतः परं पुरुषेणवेदनीयं न किञ्चिदस्तीति पूर्वार्धेन सह योजनाऽपि सुवचा । तदाऽपि **भोक्ते**त्यस्य भोक्तारमित्यावश्यक एव । एवमपि स्यात् — **भोक्तेति**, वाक्ये कर्तृनिर्देशः । **चकारेण** भोक्तारं स्वमिति समुच्चीयते । तथाच भोग्यम्, प्रेरितारम्, तथा स्वञ्च सर्वं प्रोक्तं त्रिविधं ब्रह्म मत्वा भोक्ता **एतद्** ब्रह्म भवतीति । यद्वा **भोक्ते**त्यस्य भोक्तारमित्येवार्थः । **सर्वं प्रोक्तं त्रिविध**मित्यस्य चिदचिदीश्वरात्मकं तत्त्वं तद्वेदनपर्वरूपोपायः समन्तरोक्ततत्फलपर्व च सर्वं त्रिविधं मया प्रोक्तमित्यर्थः । **ब्रह्ममेतत्** । सर्वमिदं ब्रह्मैव । एतत्सर्वज्ञाने सत्येव ब्रह्मज्ञानं संपन्नं मन्तव्यमित्यपि सुवचम् । इतः परं बहुविषयोपदेशेऽपि तत्त्वोपायफलेष्वेकैकस्यापि त्रिविधतया प्रोक्तत्वमिहोच्यत इति न दोष इति ।

ध्याने मन्त्रः प्रदर्श्यते **वह्नेरि**ति । **लिङ्गनाशः** लिङ्गानुपलम्भः । णश अदर्शने इति हि

स भूय एवेन्धनयोनिगृह्यः तद्वोभयं वै प्रणवेन देहे ॥ १३ ॥

आत्मानमरणिं[1] कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ॥ १४ ॥

तिलेषु तैलं दधनीव सर्पिः आपः स्रोतस्स्वरणीषु चाग्निः ।
एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥ १५ ॥

1, स्वदेहमरणिं. शां.

---

मथने सतीन्धनयोनितयेन्धनप्रभवतया गृह्यते । तद्वत् प्रणवेन परमात्मशरीरभूते जीवे शोध्यमाने पूर्वमप्रतीतस्यान्तर्यामिणः सूक्ष्मवस्त्राञ्चलान्तर्गतमाणिक्यवत् प्रत्यग्वस्त्वन्तर्गतस्योपलब्धिर्भवतीत्यर्थः । **तद्वोभयमि**त्यत्र वाशब्दः इवार्थः । ( १३ )

प्रणवेन प्रकाशप्रकारमेव दर्शयति **आत्मान**मिति । स्वात्मनि प्रणवेन ध्यायमाने तदन्तर्गत आत्मा निगूढवत् स्थितः प्रकाशत इत्यर्थः । ( १४ )

तदेव प्रपञ्चयति **तिलेषु – पश्यति** । यथा तिलादिस्थिततैलादिकं यन्त्रपीडनाद्युपायेन गृह्यते, एवं सत्यतपोलक्षणोपायेन परमात्मा गृह्यत इत्यर्थः । ( १५ )

---

धातुः । **स भूय एवे**ति । **भूयः** पश्चात् । **स एव** साक्षात् वह्निरेवेत्यर्थः । **उभयम्** देवात्मा तच्चिह्नञ्चेति द्वयम् । तदभिव्यक्तिप्राचीनानि च चिह्नानि अनन्तराध्याये **नीहारधूमे**ति मन्त्रेण गणयिष्यन्ते । पाञ्चभौतिकस्य देहस्य प्रणवार्थत्वाभावेन उत्तरारणिस्थानापन्नप्रणवमथ्यमानत्वायोगात् **देह**शब्दः परमात्मशरीरभूतजीवात्मपरः । उत्तरारणिर्नाम उपरितनमरणिभूतं मन्थनकाष्ठम् ।

**निगूढव**दित्यस्य निगूढाग्निवत् इत्यर्थः अरणिनिदर्शनबलात्, 'पश्येद् ब्रह्माग्निगूढवत्' इति ध्यानबिन्दूपनिषद्दृष्टप्रकृतजातीयमन्त्रचतुर्थपादतश्च ज्ञायते । अन्यानि च निगूढानि अनन्तरमन्त्रेण दर्श्यन्ते । प्रणवेन मथनञ्च विहितप्रतिषिद्धाचरणानाचरणपूर्वकमित्युच्यते **सत्येने**त्यादिना । **सत्यं** यमान्तर्भूतम्, **तपो** नियमान्तर्गतम् । एवं सत्यं सामान्यधर्मः, **तपो** विशेषधर्मः ।

**सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।**
**आत्मविद्यातपोमूलं तत् ब्रह्मोपनिषत्परम् तद्ब्रह्मोपनिषत्परम् ॥ १६ ॥**

इति श्वेताश्वतरोपनिषदि प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

**युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः ।**

---

**सर्वव्यापिन**मिति । क्षीरार्पितसर्पिस्समतया सर्वव्याप्तमात्मानं प्रत्यगात्मविद्यया तपसा च ज्ञेयमुपनिषदां **परं** प्रतिपाद्यं तत् परं ब्रह्म विद्यादित्यर्थः । द्विर्वचनमादरार्थमध्यायसमाप्तिद्योतनार्थञ्च । (१६)

इति प्रथमाध्यायप्रकाशिका ॥

---

(२)

आत्मसंस्थपरमात्मप्रतीत्यौपयिकेन्द्रियनिग्रहरूपतपस्सिद्ध्यनुगुणं भगवत्प्रार्थनामन्त्रमाह **युञ्जान** इति । धियः **सविता** प्रेरकः परमात्मा पृथिव्याः **अधि**

---

**सर्वव्यापिनम्** अन्तर्बहिश्च व्याप्तम् अणावात्मनि तद्धर्मभूतज्ञानविकासे च कार्त्स्न्येन व्याप्तम् । गुरुमुखगृहीतस्वाध्यायादिकमप्यावश्यकमिति सूच्यते **उपनिषत्पर**मिति । अत्र पूर्वमन्त्रे अनुपश्यतीत्यनेनान्वयः सुवचः । पूर्वार्धमात्रस्य वा तथाऽन्वयं कृत्वा उत्तरार्धं प्रथमान्तपदात्मकं पृथग्वाक्यमित्यपि सुवचम्—अथापि मन्त्रभेदाद् वाक्यभेदो युक्त इति **विद्या**दिति पदाध्याहारः ।

**द्विर्वचन**मिति । अत्र न प्रत्यध्यायं द्विर्वचनं श्रूयते । अध्यायसमाप्तिद्योतनार्थत्वे तदावश्यकमिति चेत्—आदरार्थमित्यस्तु । आदरश्च प्रथमाध्यायोक्तस्यैवार्थस्य सर्वस्य विवरणमनन्तराध्यायैः क्रियत इति अस्य सर्वसमासरूपत्वादिति भाव्यम् ।

---

(२)

ध्याननिर्मथनाभ्यासं प्रागुक्तमधिकृत्य वक्तुं द्वितीयाध्यायस्यारम्भः । अत्र **धीपदसवितृ**पदादेरभ्यसनात्, 'तदक्षरं तत् सवितुर्वरेण्य' मिति वक्ष्यमाणरीत्या गायत्रीमन्त्रस्यानुसंधापनं कृतं भवति । तेन संध्योपासनादेर्योगोपयोगितया आवश्यकत्वं सूच्यते, "वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः" इति च श्रीविष्णुपुराणम् ।

अग्निं ज्यो[1]तिर्निचाय्य पृथिव्या अध्याभवत्[2] ॥ १ ॥

युक्तेन मनसा वयं देवस्य सवितुः सवे ।
सुवर्गेयाय शक्त्या ॥ २ ॥

युक्त्वाय मनसा देवान् सुवर्यतो धिया दिवम् ।

1. अग्नेर्ज्यो ; अग्निज्यो. 2. आभरत्.

---

ऊर्ध्वमग्निं **ज्योतिः** अग्निरूपं ज्योतिः **निचाय्य** संपूज्य अग्निहोत्रादिकर्म (दिकं) कृत्वा मनः **तत्त्वाय** साक्षात्काराय पृथिवी[1]निष्ठाग्निज्योतिस्सदृशस्वात्मनिष्ठपरमात्मतत्त्वसाक्षात्काराय **युञ्जानो** नियुञ्जानः **आभवत्** भवत्वित्यर्थः । [तत्त्वसाक्षात्काराय परमात्मनि मनो नियुञ्जानो भवत्वित्यर्थः] ( १ )

**युक्तेनेति । सवितुः** प्रेरकस्य परमात्मनः **सवे** अनुज्ञायां सत्याम् —— अनुज्ञयेति यावत् —— **युक्तेन मनसा** आत्मप्रवणेन चेतसा युक्ता वयं **सुवर्गेयाय** स्वर्गशब्दितभगवल्लोकसाधनाय परमात्मनिदिध्यासनाख्यकर्मणे शक्त्या युक्ता भवेमेत्यर्थः । ( २ )

'परमात्मा प्रणिपातमात्रेण कथमनुज्ञां प्रयच्छेत्' इत्याशङ्क्य भगवदन्तरङ्गभूतविष्वक्सेनाद्याचार्यप्रणामपूर्वकं भगवत्प्राप्तौ यतमानानामनुज्ञां प्रयच्छतीत्याह **युक्त्वायेति । सुवः** स्वर्गं लोकं भगवल्लोकं **यतः** गतान् **देवान्** पूर्वाचार्यान् **मनसा युक्त्वाय** —— छन्दसि, 'क्त्वो यक्' इति यक् । मनसा युक्त्वाय = प्रणम्येति यावत् —— **दिवं** द्योतमानं निरतिशयबृहत्त्वयुक्तं परमात्मरूपं ज्योतिः **धिया**

1. पृथिव्यादिनिष्ठाग्निज्योतिस्सदृशं ; ज्योतिस्सादृश्य. पा॰

---

**संपूज्येति** । अस्य परमात्मकर्तृकत्वबाधात् **साक्षात्कारायेति** जीवात्मककर्तृकक्रियायामन्वयः कार्यः । एवञ्च मूले **निचाय्येति तत्त्वायेत्य**त्रान्वेतीति वक्तव्यम् । न च **तत्त्वपदं** क्रियावाचि । तत् कथं क्रियानन्वये ल्यप् इति चेन्न —— साक्षात्कारायेति क्रियार्थस्योक्तत्वात् । अथवा निचाय्य साक्षात्कार्याय तत्त्वायेत्यध्याहारेण योजना । यद्वा **निचाय्येत्य**स्य संकल्प्य, प्रदर्श्येत्येवमर्थोऽस्तु । तच्च परमात्मकर्तृकमेवेति । पृथिवीनिष्ठाग्निज्योतिरित्यग्निहोत्रोपस्थापनेन, 'अरण्यादिनिष्ठाग्नितुल्यतया प्रागदर्शितस्वात्मनिष्ठपरमात्मज्योतिर्ग्रहणोपयोगित्वमस्याग्निहोत्रस्य युक्त' मिति सूच्यत इत्याशयेन **सदृशे**त्यन्तविशेषणम् ।

**क्त्वो यक् इति** । यक आगमत्वात् क्त्वाप्रत्ययान्ते तन्निवेशात् युक्त्वायेति रूपम् । अस्य

**बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३ ॥**

**युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।**
**वि होत्रा दधे वयुनाविदेक इन्महीदेवस्य सवितुः परिष्टुतिः ॥ ४ ॥**

---

उपासनरूपज्ञानेन **करिष्यतः** विषयीकरिष्यतः — ध्यातुं प्रवृत्तानिति यावत् — **तान्** मुमुक्षून् **सविता** प्रेरकः परमात्मा **प्रसुवाति** अनुजानातीत्यर्थः । [इति वयं मन्यामहे इति शेषः ] । (३)

परमात्मनि मनोयोगः तत्समाराधनं[1] कर्म च, [2]केषाञ्चिदेव भवतीत्याह **युञ्जत** इति । 'विप्रो विप्रत्वं गच्छते तत्त्वदर्शी' इत्युक्तरीत्या **विप्राः** तत्त्वदर्शिनः परमात्मनि मनः **नियुञ्जते** योजयन्ति । **धियः** ध्यानानि च योजयन्ति । **विप्रस्य** – प्रा पूरणे – पूर्णस्य, **बृहतो** गुणैः बृहत्त्वाश्रयस्य **विपश्चितः** सर्वज्ञस्य **महीदेवस्य** मह्या = भूम्या समेतस्य **देवस्य** श्रोभूमिसमेतस्य **सवितुः** प्रेरकस्य **वयुनावित्** — वयुनं ज्ञानम् । **वयुनाविदिति** छान्दसो दीर्घः — तस्य सार्वज्ञ्यादिमहिमविदित्यर्थः । तदाश्रयः **एक इत्** एक एव **परिष्टुतिः** — परिष्टुतीरित्यर्थः । छान्दसं ह्रस्वत्वम् । (परिचर्येति?) परिचर्या इति यावत् — **होत्रा** ऋत्विग्भिः —, मन्त्रेणेति वाऽर्थः — **विदधे** कृतवानित्यर्थः ।[3] [4]ब्रह्मस्वरूपविदेव तत्परिचर्याकारी, तेन कृतमेव भगवत्परिचरणं भगवत्प्रीणनं भवतीत्यर्थः । (४)

1. तत्साधनं. 2. युगपदेव. 3. तदाश्रयब्रह्ममहिमवित्त्वमेव भगवत्परिचरणमिति अधिकपाठ इह । 4. ब्रह्मस्वरूपवित्परिचर्या एव तत्परिचर्या । तया कृतमेव पा०

---

**करिष्यत** इति द्वितीयाबहुवचनेनान्वयः ।

योगिनामपि सर्वेषां भगवद्गतेनान्तरात्मना तत्परिचर्यैकपरस्य दौर्लभ्यं प्रदर्श्यते **युञ्जत** इति । **देवशब्दस्य** पतिपर्यायत्वाभावात् मह्या समेतो देवः महीदेव इति मध्यमपदलोपी समासः । अत्र महीति पृथक्पदं मत्वा, **परिष्टुतिरि**त्यत्रापि छान्दसं दीर्घमप्रकल्प्य, **मही** भूमिः तत्स्थः सर्वोऽपि देवस्य परिष्टुतिः विभूतिः स्तवकरणार्हेति वा, देवस्य **परिष्टुतिः** स्तुतिः **मही** महतीति वाऽर्थो भाव्येत । परंतु तदा वाक्यभेदः सोढव्यः । **विदध** इत्यत्र किञ्चित् कर्माप्यध्याहार्यम् । **होत्राः** होमादिक्रिया इति कर्मेति केचित् ।

युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ ५ ॥

अग्निर्यत्राभिमथ्यते वायुर्यत्राधिरुध्यते ।
सोमो यत्रातिरिच्यते तत्र संजायते मनः ॥ ६ ॥

सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यम् ।
तत्र योनिं कृणवसे न हि ते पूर्तिमक्षिपत् ॥ ७ ॥

---

**युजे** वामिति । दिव्यस्थानस्थिताः सर्वे ब्रह्मपुत्राः मत्प्रार्थनां शृण्वन्तु । **सूरेः** नित्यसूरिकर्तृका स्तुतिपथादनपेतत्वेन **पथ्या** स्तुतिः । **वां पूर्व्यं**—वः पूर्वमित्यर्थः । वचनव्यत्ययश्छान्दसः — सा[1] तादृशं ब्रह्म यथा प्राप्नोति, एवं **युजे** योगाय — ब्रह्मप्राप्तये इति यावत् — मया कृतः **विश्लोकः** विविधः श्लोकः स्तोत्ररूपः **एतु** प्राप्नोतु । नित्यसूरिकृतां स्तुतिं यथा भगवानङ्गीकरोति, एवमङ्गीकरोत्वित्यर्थः । ततश्च योगप्रवृत्तेः प्राक् भगवत्स्तुतिः कर्तव्येत्युक्तं भवति ।(५)

योगमारभमाणस्य शीतोष्णदेशः परिहर्तव्य इत्याह **अग्निरि**ति । **अभिमथ्यते** अभितो निवार्यते । **अधिरुध्यते** आधिक्येन रुध्यते । वायुर्यत्र न वातीत्यर्थः । **सोम**शब्देन हिमं लक्ष्यते । अतिशयेन **रिच्यते** निरस्यते । तत्र मनः प्रत्यक्प्रवणं जायत इत्यर्थः । ( ६ )

**सवित्रे**ति । एवं गुरुप्रणामभगवत्स्तुतिप्रसन्नेन सवित्रा कृतेन **प्रसवेन** अनुज्ञया — तदनुज्ञातस्सन्निति यावत् — **पूर्व्यं** पूर्वपृष्टं (श्रेष्ठं) ब्रह्म **जुषेत** सेवेत—ध्यायेदिति यावत् । **तत्र** परमात्मनि **योनिं** स्थानं—मनस इति शेषः—**कृणवसे** कुरुष्व । तथासति ते **पूर्तिं** मनोरथपूर्तिं तत् ब्रह्म **नाक्षिपत्** न क्षिपति । न निरस्यतीत्यर्थः । लडर्थे लङ् । (७)

1. सः.

---

**वः पूर्व**मिति । पुत्रभूतयुष्मदपेक्षया पूर्वभूतमित्यर्थः । नित्यसूर्यपेक्षया ब्रह्मणः पूर्वत्वञ्च तेषां तदनुत्पन्नत्वेऽपि तदधीनस्वरूपस्थितिप्रवृत्तिकत्वात् । **नमोभिः** प्रणामैः सहेत्यर्थः । **विश्लोक एतु पथ्येव सूरेः** । असमर्थकर्तृकत्वादपथ्योऽपि श्लोकः सूरिकर्तृकपथ्यस्तुतिवद् भावनीय इति नैच्यानुसंधानम् ।

देवपरिष्टुतिभूतायां मह्यां ध्यानोपयोगि स्थलमाह **अग्नि**रिति ।

**तत्र योनिं कृणवसे** इत्यस्य पूर्वमन्त्रोक्तदेशे स्थानं परिकल्पयेत्यर्थोऽपि घटते । एवञ्चास्य मन्त्रस्य पूर्वमन्त्रानन्तर्ये औचित्यम् ।

त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि ॥ ८ ॥

प्राणान् प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत ।
दुष्टाश्वयुक्तमिव वाहमेनं विद्वान् मनो धारयेताप्रमत्तः ॥ ९ ॥

समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश(श्र)यादिभिः ।
मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणेन योजयेत् ॥ १० ॥

---

योगदर्शितिकर्तव्यतामाह **त्रिरुन्नत**मिति । उरःकण्ठशिरःप्रदेशेषून्नतम् इतरत्र समं शरीरं स्थापयित्वा सर्वाणीन्द्रियाणि हृदयकुहरे संनिवेश्य **ब्रह्मोडुपेन** [1]प्रणवलक्षण[ब्रह्मस्वरूप]प्लवेन — ब्रह्मध्यानेनेत्यर्थः — सर्वाणि भयावहानि नानाविधानि जन्मस्रोतांसि तरेदित्यर्थः । (८)

प्राणायामप्रकारमाह **प्राणा**निति । 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु' इत्युक्तरीत्या मितायासः प्राणवायुं निरुध्य निरुद्धेषु अत्यन्तपीडापरिहाराय नासिकया रेचनं कुर्यात् । ततश्चावहितस्सन्, दुष्टाश्वयुक्तं रथं यथा सारथिः स्ववशं करोति, तथा मनोनिरोधज्ञो मनः स्ववशं कुर्यादित्यर्थः । (९)

योगानुष्ठानयोग्यं देशं विस्तरेणाह **सम** इति । निम्नोन्नतत्वादिरहिते परिशुद्धे क्षुद्रपाषाणवह्निसिकता[2]रहिते वाद्य[3]ध्वनिजलाशयाद्यत्यन्तसामीप्यरहिते मनोनुकूले चक्षुःपीडाहेतुभूतौष्ण्यादि[2]रहिते गुहादिलक्षणनिवातदेशाश्रयणेन योगमनुतिष्ठेदित्यर्थः । सूत्रितञ्चैतत्, "यत्रैकाग्रता तत्राविशेषात्" ।

तत्र हि, आसीनस्तिष्ठन् गच्छन् वोपासीत अविशेषादिति पूर्वपक्षे [4]उच्यते — "आसीनः संभवात्" । आसीन एव उपासीत । तस्यैव उपासनस्य संभवात् ।

1. प्राणादिविलक्षण. 2. वायु. 3. भूतोल्कादि. 4. पूर्वपक्षिते.

---

**स्रोतांसि सर्वाणि भयावहानी**ति योगविच्छेदकानां पापानामिव, आध्यात्मिकाद्यनन्तोपप्लवानामपि ग्रहणम् ।

एतावत्पर्यन्तेन अष्टाङ्गयोगे यमनियमौ यथायथं दर्शिताविल्यपि ध्येयम् । यमो निषिद्धवर्जनम्; नियमो विहितानुष्ठानमिति संग्रहः । अथ प्राणायामप्रत्याहारौ प्रोच्येते **प्राणा**निति मन्त्रेण । **वाहो** रथः ।

अथ ध्यानधारणासमाधिरूपो योगो देशविशेषोपदेशपूर्वमुच्यते **सम** इति । पूर्वम्, 'अग्निर्यत्रे' ति मन्त्रसंनिधावनुक्त्वा इह विस्तरेण देशव्युत्पादनं प्रत्याहारपर्यन्तापेक्षया योगार्थं देशविशेषान्वेषणमत्यावश्यकमिति ज्ञपये । **शब्दजलाशयादिभि**रित्यस्य मनोनुकूले इत्यत्रान्वयायोगात् पूर्वस्मात् पदात् **विवर्जिते** इत्यस्य पूर्वभागविवर्जितस्यानुषङ्गः । **न चक्षुःपीडन** इत्यत्र पर्युदासनञोऽप्यसमासः, 'विम्लानो न विमर्दने' (न्या. कु.) इतिवत् ।

नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकशशिनाम् ।
एतानि रूपाणि पुरस्सराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ ११ ॥
पृथ्व्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥ १२ ॥
लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवञ्च ।

तिष्ठतो गच्छतश्च यत्नसापेक्षत्वात्, शयानस्य निद्राप्रसक्तेश्च, उपासनस्य ध्यानरूपत्वाच्च एकाग्रचित्तताविश्यम्भावात्, चित्तैकाग्र्यस्य आसनसापेक्षत्वाच्चासीन एव कुर्यात् । "अचलत्वञ्चापेक्ष्य" । 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्ष' मित्यादिषु निश्चलत्वधर्मेण [1]ध्यातृसाम्यव्यपदेशदर्शनात् ध्यातृनिश्चलत्वस्यापेक्षितत्वात् निश्चलत्वस्य च आसिकामन्तरेणासंभवात् आसीन एव कुर्यात् । "स्मरन्ति च", 'उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' इति । "यत्रैकाग्रता तत्राविशेषात्" । 'समे शुचौ शर्करावह्निवालुकाविवर्जिते' इत्यविशेषेण एकाग्रतानुकूलदेशविशेषस्यैवाङ्गत्वकीर्तनात् तेनैव [च] न्यायेन एकाग्रतानुकूल — [2]आसनस्यापेक्षितत्वमस्तीति अवसीयत इति स्थितम् । प्रकृतमनुसरामः । (१०)

योगमभ्यस्यतो ब्रह्माभिव्यक्तिप्राचीनानि तच्चिह्नान्याह **नीहारेति** । प्रथमतो नीहारवत् स्फुरति, ततो धूमार्कानि (न) लाद्याकारतया स्फुरति । एवम्भूतानि स्फुरणानि पूर्वप्रवृत्तान्यागामिब्रह्माभिव्यक्तिचिह्नानीत्यर्थः । (११)

योगाभ्यासस्य कायसिद्धिफलक[3]त्वमाह **पृथ्वीति** । **गुणो** गुणनमभ्यासः । योगाभ्यासे प्रवृत्ते सति योगमहिम्ना सत्त्वप्रचुरभूतारब्धे पाञ्चभौतिके शरीरे समुत्थिते[4] तादृशसर्वरोगादिदाह[5]समर्थत्वेनाग्निरूपेण योगेनारब्धशरीरयुक्तस्य पुंसो रोगादिर्न [सं]भवतीत्यर्थः । (१२)

लघुत्वमिति स्पष्टोऽर्थः । (१३)

1. धातु. 2. नुकूलसाधनस्य पा॰ नुकूलस्यासनस्य ? 3. कार्यसिद्धिफलत्व. 4. समुपस्थिते. 5. समर्थेन.

नीहारादिस्फूर्तिक्रमे उत्तरोत्तरं प्रसन्नताप्रकाशमानतयोरतिशयस्थितिर्भाव्या ।

सात्त्विकत्वादिभेदेन पार्थिवादिप्रकारभेदेन च विचित्राणामाहाराणां सेवनेन प्राणायामयोगाभ्यासाहारबलादपि कायस्य विचित्ररूपः परिणामः संपद्यते । इदं फलञ्च, योगसिद्धिचिह्नञ्च भवतीत्युच्यते पृथ्वीति । पञ्चात्मके देहे पृथिव्यादेरेकैकस्यापि योगाधीनो गुणातिशयो भवतीति ज्ञापनाय पृथ्व्यादीनां विविच्य निर्देशः ।

'सत्त्वं लघु प्रकाशक' मित्युक्तरीत्या सत्त्वातिशयो लघुत्वमित्यादिना प्रदर्श्यते । उक्तेषु

**गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥**
**यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्त( क्त? )म् ।**
**तद्वात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥ १४ ॥**

---

योगमभ्यस्यतो ब्रह्मोपलब्धिप्रकारं तत्फलञ्चाह **यथैवेति**। मृदाऽयसा वा उपलिप्तः = निर्मितः प्रतिमाविशेषः सुधाविशेषान्त (विशेषाख्य (?) रञ्जकद्रव्य-लिप्तस्सन् तेजोमय[1]तया दीप्यते । तद्वत् सुधाविशेषलिप्ततेजोमय[2]प्रतिमासमं दर्शन-समानाकारध्यानेनोपलभ्य कश्चित् पुरुषधौरेयो निवृत्तसंसारगन्धः सिद्धार्थो भवती-त्यर्थः । **तद्वेत्यत्र** वाशब्द इवार्थः । **तद्वत् सतत्त्वं प्रसमीक्ष्येति** पाठेऽप्यय-मेवार्थः । केचित्तु **सुधान्तमिति** मत्वा सुधौतमि[3]त्यर्थे सुधान्तमिति **शब्द** इत्यपि वदन्ति । ( १४ )

1. तेजोरूप. 2. तेजोविशेष । 3. सुधातरित्यर्थे.

---

लघुत्वादिषु वातपित्तश्लेष्माद्यात्मनि शरीरे कतमस्य भूतस्य गुणप्रकर्षात् कतमद् भवतीत्यपि विमृश्यावधार्यम् ।

एवं सिद्धिमता योगमविच्छिन्नमभ्यस्यता प्रथमतः शुद्धं स्वात्मतत्त्वं समीक्ष्यत इतीदं सदृष्टान्तमुच्यते **यथैवेति**। **सुधान्तमित्यस्य** सुधा अन्ते रञ्जकतया यस्य तदिति व्युत्पत्तिः। अत्रायं भाष्यप्रतीतोऽर्थः — मृदादिनिर्मितं सुधया मसृणितं बिम्बं यथा तेजोमयं प्रकाशमान-मस्तीति । **सुधान्तमितिमत्वेति** । अत्र भाष्यसंमतः पाठः क इति विमृश्यम् । **इत्यपि वदन्तीति**। शाङ्करभाष्यत्वेन प्रसिद्धे एवमुक्तम् । तत्रोक्तो वाक्यार्थस्तावत् — बिम्बं मृदा मलिनितं पश्चात् सुधौतं = क्षालितं चेत् तेजोमयं भ्राजेत, तथा परमात्मा समीक्ष्यते इति। बिम्बञ्च लोहादिकृतं ग्राह्यम् । तेजोमयमिति वा तैजससुवर्णादिमयार्थकमिति । बिम्बं नाम आदर्श इत्यपि कश्चित् ।

नन्वत्रोत्तरमन्त्रे ब्रह्मतत्त्वातिरिक्तस्य आत्मतत्त्वस्य निर्देक्ष्यमाणत्वात् **आत्मतत्त्वं समीक्ष्य** इति तदीक्षणमेव वक्तुमुचितम्; न ब्रह्मतत्त्वेक्षणम्। एवञ्च जीवसाक्षात्कारानन्तर-त्वात् परसाक्षात्कारस्य स वक्तव्य इहोक्तो भवति। तदिह सुवर्णादिना बिम्बनिर्माणकालस्थिति-मनुसृत्य दृष्टान्तः प्रदर्श्यते। बिम्बनिर्माणार्थं प्रथमतः तत्तुल्याकृतिं निर्माय मृदा यथार्हं तामुपलिप्य अग्निना प्रतप्य मृदन्तर्गतं बिम्बाकृतिद्रव्यं द्रवीकृत्यापसार्य तत्स्थाने द्रवीकृतं सुवर्णादि निषिच्य बिम्बे कृते तस्यामवस्थायामन्तर्हितबिम्बकं मार्तिकद्रव्यं यथा स्यात्, तथेद-मन्तर्निगूढपरमात्मकमात्मतत्त्वमस्ति; तत् समीक्षत इत्यर्थ इति चेत्—सत्यम्। **आत्मतत्त्व**-मिति जीव एव गृह्यते। परंतु तथार्थवर्णने मृद एव जीवात्मदृष्टान्तत्वात् बिम्बस्य परमात्म-दृष्टान्तत्वात, यथा बिम्बं भ्राजते, तथा आत्मतत्त्वमिति कथनं न युज्यते। आत्मतत्त्वमित्यस्य

**यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।**
**अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १५ ॥**

**एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।**
**स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति विश्वतोमुखः ॥ १६ ॥**

---

**यदाऽऽत्मे**ति । यदा योगयुक्तः परमात्मप्रतीत्युपायभूतेन प्रणवप्रतिपादितपरमात्मशेषभावेन प्रत्यगात्मना [1]साधनेन तत्स्थं परमनादिमनन्तं हेयप्रतिभटं अस्त्रभूषाध्यायोक्तरीत्या सर्वतत्त्वात्मकास्त्रभूषणोपेतं परं ब्रह्म सूक्ष्मवस्त्रान्तरितमाणिक्यवत् [यदा] **पश्येत्**, तदा सर्व [बन्धक] कर्महानिर्भवतीत्यर्थः । ( १५ )

तस्य सर्वात्मकत्वं प्रपञ्चयति **एष** हीति । हे **जना** इति परस्परं मुनीनां संबोधनम् । 'दिव्यो देव एको नारायण' इति देवत्वेन प्रसिद्धः परमात्मैव **सर्वाः प्रदिशः** प्रकृष्टदिग्वर्तिपदार्थविशेषा इत्यर्थः । **नु**शब्दश्चार्थे । पूर्वं हिरण्यगर्भरूपेणोत्पन्नोऽप्ययमेव । **विश्वतोमुखः** सर्वविधो गर्भस्थजन्तुः [जातः?] जनिष्यमाणश्च स एवेत्यर्थः ।

ननु भिन्नभिन्नजीवानां कथमेकात्मकत्वमित्याशङ्क्याह **प्रत्यङि**ति ।

1. संबन्धेन.

---

जीवात्मसंबन्धि तत्त्वं परमात्मेत्यर्थवर्णने वैरूप्यम् । अतो भाष्योक्त एवार्थः । **सुधान्त**मिति पदप्रसिद्धार्थनिर्वाहाय भाष्ये शाङ्करार्थत्यागः । सुधौतमित्यर्थसंभवे तु सोऽप्यर्थो नोपेक्ष्यः । कर्मवेष्टितं जीवतत्त्वम्, मृदाद्युपलिप्तं बिम्बं शोधितं यथा तेजोमयम्, तथा दीप्तं स्यात् ध्यानकाले इत्युक्तेः समञ्जसत्वात् । **सुधात**मित्यपि पठन्ति । **वीतशोक** इति । जीवात्मदर्शनं पूर्वोक्तनानाभिव्यक्तितुल्यं न भवति । अपितु उपायभूतविशिष्टदर्शनान्तर्भावार्हमिति भावः । एवं वीतशोकस्यापि सर्वपाशमोक्षस्तु देवदर्शनादेवेति स्फष्टमुत्तरत्र ।

एवं जीवात्मतत्त्वसाक्षात्कार उक्तः । अथ ब्रह्मसाक्षात्कार उच्यते **यदे**ति । तत्स्थं परमित्युक्त्या मूले तत्त्वमित्येतत्स्थाने तत्स्थमिति पाठ ऊह्यते । अत एव भिन्नत्वं तस्येत्याह **पर**मिति । **विशुद्ध**मित्यस्य हेयप्रतिभटमित्यर्थः । **सर्वतत्त्वै**रिति इत्थम्भूतलक्षणे तृतीया । तदाह **भूषणोपेत**मिति । अस्त्रभूषाध्यायो विष्णुपुराणे (१-२२.) 'भूषणास्त्रस्वरूपस्थं यथेदमखिलं जगत् । बिभर्ति भगवान् विष्णुस्तन्ममाख्यातुमर्हसि' इत्यारभ्य द्रष्टव्यः । अनेन दिव्यमङ्गलविग्रहोपासनमपि व्यञ्जितम् ।

**प्रदिश** इति बहुव्रीहिः । **सर्वा** इति स्त्रीलिङ्गानुसारादबहुव्रीहिर्वा । प्रकृष्टाः दिशः प्रदिशः । प्रकर्षः सर्वपदार्थोपाधित्वम् । **प्रत्यङ् जना** इत्यत्र प्रत्यङ्मुखा इति तैत्तिरीय(ना. १३.) पाठः ।

**यो देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश ।**
**य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ १७ ॥**

इती श्वेताश्वतरोपनिषदि द्वितीयोऽध्यायः ॥

---

अहमिति भासमानत्वं प्रत्यक्त्वम् । सर्वेषां प्रवुद्धानां वामदेवादीनामात्मान (त्मना ?) महमिति प्रतीतौ परमात्मनोऽपि भासमानतया तस्य सर्वं प्रति प्रत्यक्त्वात् तस्य सर्वान् प्रति आत्मत्वमुपपद्यते । न चास्मदाद्यहम्बुद्धौ परमात्मनोऽभानात् कथमस्मदादीन् प्रति प्रत्यक्त्वमिति वाच्यम् — दोषवशादभानेऽपि योग्यत्वसत्त्वेनादोषात् । ( १६ )

अन्तर्यामितया सर्वात्मत्वम्; न तु स्वरूपेणेत्येतत् प्रदर्शयति **यो देव** इति । स्पष्टोऽर्थः ॥ ( १७ )

॥ इति द्वितीयाध्यायप्रकाशिका ॥

---

ननु सर्वस्याप्यात्मनः स्वं स्वं प्रति प्रत्यक्त्वाविशेषात् प्रत्यङ् इति को विशेष उच्यते ? न च **जात** इत्यादेर्विशेष्यसमर्पकं प्रत्यङ् इति पदं जीवपरमेवेति वाच्यम् --- अनपेक्षिततया व्यर्थत्वात् । न च, 'कश्चिन् धीरः प्रत्यगात्मानमैक्षत्' इति कठोक्तमेव जीवं प्रति परमात्मनि प्रत्यक्त्वमिति वाच्यम् – तत्रापि विवादात् । तत्र प्रत्यक्पदप्रयोगः जीवात्मग्रहणार्थं इत्येव किं न स्यात् ? यद्वा पराञ्चि सन्ति खानि स्वभावतः । यस्तु प्रत्यग् यथा तथा आवृत्तचक्षुः, स आत्मानमैक्षदित्यप्यर्थस्तत्र घटते । न च परमात्मनः स्वं प्रति प्रत्यक्त्ववत् जीवान् प्रत्यपि प्रत्यक्त्वमस्तीति ज्ञापनार्थं प्रत्यङ् इत्युच्यत इति वाच्यम् — असंभवात् । ज्ञातृज्ञेययोरभेदः प्रत्यक्त्वमिति तार्किकाः । स्वविषयकज्ञानाधारत्वं तत् स्वस्य स्वस्यैव भवति । स्वयम्प्रकाशत्वरूपवेदान्तिपक्षे, 'स्वस्मै भासमानत्व'मिति निर्वचनं सुवचम् । तत्रापि भासमानस्य भानफलिनश्चैक्यकथनात् भासमानजीवातिरिक्तस्य परमात्मनः कथं तद् घटते । किञ्चानेन, 'भिन्नभिन्नजीवानां कथमेकात्मकत्वम्' इत्याशङ्का च कथं परिह्रियत इत्यत्रोपपादयति **अहमिति भासमानत्व**मिति । अयं भाव --- **कथमेकात्मकत्व**मित्यस्य कथमेकान्तर्यामिकत्वमिति नार्थः । वचनबलेन एकान्तर्यामिकत्वसिद्धौ कथमित्याक्षेपस्याप्रसक्तेः; जीवानां भिन्नभिन्नत्वस्य च एकान्तर्यामिकत्वस्य च मिथो विरोधाभावाच्च । अतः भिन्नभिन्नानामेकाभेदः कथमित्येवाशङ्का । तादृशाभेदस्वीकारे तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नयात् मिथोप्यभेदापत्तिरित्याशयः । तत्र **प्रत्यङ्** इति समाधिरुच्यते । जीवानां परमात्माभेदनिबन्धनं तदात्मकत्वं नोच्यते; किं तु तत्तज्जीवं प्रति परमात्मनः प्रत्यक्त्वनिबन्धनं तदात्मकत्वम् । कथं तस्य जीवं प्रति प्रत्यक्त्वमिति चेत्—

## ॥ अथ तृतीयोऽध्यायः ॥

**य एको जालवानीशत ईशनीभिः सर्वान् लोकानीशत ईशनीभिः ।**
**य एवैक उद्भवे संभवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥**

(३)

उक्तज्ञानस्य फलमाह **य एक** इति । 'अपहतपाप्मा दिव्यो देव' इति देवत्वेन श्रुतिप्रसिद्धः परमात्मा प्रकृतिशब्दितमायारूपवागुरायुक्तस्सन् ईशनसमर्थाभिः ज्ञानबलक्रियाशक्तिभिः मायाजालगोचरान् प्राकृतांश्च (न्) लोकानीष्टे तदगोचरान् अप्राकृतांश्च लोकानीष्टे । यश्च जगतः **उद्भवे** उत्पत्तौ, **संभवे** — समित्येकीकारे — लयापरपर्याये एकीभावे च [य] ईष्टे, तज्ज्ञानं मोक्षसाधनमित्यर्थः । (१)

---

उच्यते । स्वविषयधिषणाधारत्वमात्रं प्रत्यक्त्वपदार्थतयोक्तं तार्किकैः । वयं तु स्वयम्प्रकाशत्वस्य प्रामाणिकतया स्वस्मै स्वेनैव भानं तदिति च ब्रूमः । न तु स्वविषयधिषणाधारत्वमुपेक्षामहे । उभयाविरोधेन च, अहमिति भासमानत्वं प्रत्यक्त्वम् । भासनञ्च स्वेन वा भवतु, धर्मभूतज्ञानेन वा । तत्र जैवस्वयम्भासनाश्रयत्वस्य परमात्मन्यभावेऽपि तदीयधर्मभूतज्ञानाधीनतादृशभासनाश्रयत्वं तस्यास्त्येव । अहमर्थविषयकानुमितिशब्दबोधनिदिध्यासनादीनामिष्टतया अहमर्थस्य धर्मभूतज्ञानविषयत्वापलापायोगात् । तत्र वेदान्तव्युत्पत्तिमतां वामदेवादीनां योगाद्यधीनस्य अहमितिभासनस्य परमात्माऽप्याश्रय इति स तान् प्रति प्रत्यक् । तथाभानञ्च जीवपरयोः शरीरात्मभावप्रयुक्तम्; न त्वभेदप्रयुक्तम् । जीवान्तरस्य चान्यं प्रति न प्रत्यक्त्वप्रसङ्गः । इममेव शरीरात्मभावमनुभवपर्यन्तेन दर्शयितुं प्रत्यङ् इत्युक्तम् । काममस्तु, 'कश्चिद्द्धीरः प्रत्यगात्मानमैक्षत्' इत्यत्र जीवपरत्वम्, यद्वा प्रत्यक्पदं तत्र जीवपरम्; प्रतीच आत्मा प्रत्यगात्मेति आत्मपदं परं परमात्मपरमिति; **सर्वार्थसिद्धौ** जीवपरे(७)नत्प्रत्यक्पदग्रहणात् । इह तु **प्रत्यगि**ति परमात्मपरमेवेति । वस्तुतो जीवं प्रति परस्य मुख्यप्रत्यक्त्वस्य दुर्वचत्वेऽपि अहमितिभासमानत्वरूपसामान्याकारेण तद्विवक्षेह शरीरात्मभावव्यञ्जनायाऽऽदृता श्रुताविति न कश्चिद् दोष इति । प्रत्यगित्यस्य, 'एवं सर्वप्रत्यक्छरीरक' इत्येवार्थवर्णनसंभवेऽपि ज्ञानिभिः परमात्मा अहमित्येव गृह्यत इति विशेषव्युत्पादनायैतद्विवक्षेति ॥

---

(३)

एवममष्टाङ्गेन योगेन आत्मतत्त्वसाक्षात्कारपूर्वकं ब्रह्मतत्त्वसाक्षात्कारसंपादनप्रकारो दर्शितः । अथ तृतीये तस्यैकस्यैव मोक्षप्रदत्वं प्रतिपाद्यते । एतं विदुरिति वक्तव्ये, **एतद्विदुरि**ति नपुंसकप्रयोगात् उद्भवसंभवनियमनकर्तुरैक्यज्ञापने नैर्भर्यं व्यज्यते । **एतत्** ऐक्यमित्यर्थः । (१)

**एको हि रुद्रो न द्वितीयाय तस्थुः य इमान् लोकानीशत ईशनीभिः ।**
**प्रत्यङ् जनास्तिष्ठति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः ॥२॥**

---

ननु 'य एतद्विदुरमृतास्ते भवन्ती' ति पूर्वमन्त्रे सर्वलोकेशनारायणस्यैव[1] मोक्षसाधनज्ञानविषयतया मोचकत्वमिति यदुक्तम्, तदयुक्तम् । जगत्कारणत्वेन प्रसिद्धानां [2]ब्रह्मादीनां ज्ञानस्यैव मोक्षसाधनत्वमिति वक्तुमुचितत्वादित्याशङ्क्याह **एको** **हीति** । हे जनाः ! 'सर्वलोकानीशत ईशनीभिः,' 'प्रत्यक् तिष्ठती' ति निर्दिष्टः **विश्वा भुवनानि संसृज्य** सृष्ट्वा अन्तकाले **सञ्चुकोच** संहृतवान्, **गोपाः** गोप्ता रक्षिता च यः, स एक एव **रुद्रः** — संसाररुजं द्राव(द्रव)यतीति रुद्रः— संसारमोचक इत्यर्थः । **द्वितीयाय** द्वितीयत्वाय सहायतया न केऽपि **तस्थुः** । सहायतया वा उपायान्तरतया वा केऽपि न स्थितवन्तः । मोचकोऽन्यः कोऽपि नास्ति । 'वेदाहमेतं पुरुषं महान्तम्' इति महापुरुषं प्रस्तुत्य, 'तमेवं विद्वानमृत इह भवति; नान्यः पन्था विद्यते' इति मार्गान्तरनिषेधात् । अत्र रुद्रशब्दो [यौगिकः ?]; रूढ्यर्थापेक्षया प्रकृतौपयिकस्य मानान्तराविरुद्धस्य संसारमोचकत्वलक्षणयौगिकार्थस्य मनसि विपरिवर्तमानस्य शारीरकापशूद्रन्यायेन बलवत्त्वात् । अस्याश्चोपनिषदो भगवत्परत्वस्य साधयिष्यमाणत्वाच्च नात्र चोद्यावकाशः । (२)

1. नारायणज्ञानस्यैव मोक्षसाधनत्वमिति यदुक्तम् । 2. ब्रह्मादीनां सद्भावादिति ।

---

नियमनरूपस्थितिकर्तुः उद्भवकर्तुः प्रलयकर्तुश्च प्रत्येकमेक्यं वेदनीयतयोक्तमिति न मन्तव्यम्; किं तु सर्वकर्तुरैक्यमिति ज्ञाप्यते द्वितीयमन्त्रे । तेन, कारणज्ञानस्य मोक्षहेतुत्वात् जन्मस्थेमध्वंसकारणानाञ्च त्रित्वात् त्रयोऽपि मोक्षप्रदा इति मतिर्व्युदस्यते । **एको हि रुद्र** इति । नात्र एकोद्देशेन रुद्रत्वविधिः; **न द्वितीयाय तस्थुरिति** अनेकत्वपक्षव्युदसनेन एकत्वविधानपरत्वस्य स्पष्टत्वात् । अतो रुद्रपदमुद्देश्यसमर्पकम् । उद्देश्यश्च प्रकृतः । न च रुद्राख्यदेवताविशेषः प्राक् कण्ठोक्तः । अतो रुद्रपदेन, पूर्वोक्तो य आकारः, तद्विशिष्टो वाच्यः । तत्र पूर्वमन्त्रोक्तेष्वाकारेषु ईशितृत्वोद्भवसंभवकर्तृत्वानामत्र द्वितीयादिपादैरनूद्यमानतया, 'य एतद्विदुरमृतास्ते भवन्ती' त्युक्तो मोक्षप्रदत्वाकार एव शिष्यते । रुद्रशब्दश्च तत्प्रतिपादनौपयिकयोगशक्तिसंपन्न इति स एवार्थो ग्राह्य इत्याशयेनाह **संसाररुज**मित्यादि । प्रत्यङ् तिष्ठतीत्यस्य प्रतीपमञ्चतीति प्रत्यङ् यथावस्थितस्वस्वरूपसाक्षात्कारवान् तिष्ठतीत्यर्थेन मायावश्यत्वाभावज्ञापकत्वादिना **जालवा**नित्येतदनुवादत्वमपि संभवेत् । **संचुकोचे**ति अणिजन्तप्रयोगेण स्वयं तस्य संकोचरूपलयाश्रयत्वावगमनात् ब्रह्मण उपादानत्वं दर्शितं भवति । **भुवनानी**त्यस्य **संसृज्ये**त्यत्रैव अत्राप्यन्वये तु संहृतवानिति णिजर्थो ग्राह्यः । **गोपाः** इति च सृष्टिस्थितिलयानां सर्वेषां चेतनगोप्तृत्वरूपताज्ञापनार्थम् । तत् स्पष्टं **दयाशतके** । तदनेन मन्त्रेण सृष्टिस्थितिप्रलयकर्तुः मोक्षप्रदस्यैकत्वमुक्तम् । (२)

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।**
**सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥ ३ ॥**

**यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः ।**

---

**विश्वत** इति । 'अनेकबाहूदरवक्त्रनेत्र' मित्युक्तरीत्या अनन्तनयनानन-पाणिपादादियुक्तनित्य (?) दिव्यविग्रहयुक्तः असहाय एव द्युपृथिव्यादिसर्वप्रपञ्च [वि] निर्माता जीवान् बाहुभ्यां पतत्रशब्दितैः पद्भिश्च **संन (संध) मति** संयोजयति । करणकलेबरसंयोगं करोतीत्यर्थः । सर्वेषां शरीरेन्द्रियसंबन्धं कुर्वन् स्वयमनन्या-धीनानन्तशरीरेन्द्रियवानित्यर्थः । (३)

परमात्मोपलब्धिप्रार्थनामन्त्रमाह **यो देवाना**मिति । 'यान्येतानि देवत्रा क्षत्राणि, इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति बृहदारण्य-कोक्तरीत्या इन्द्रवरुणरुद्रादीनामुद्भवः । उद्भवत्यस्मादित्युद्भवः । प्रकर्षेण भवत्य-स्मादिति **प्रभवः** । प्रकर्षेण भवनं देवाधिपतित्वादिरूपेणास्य प्रभवनम् । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति कर्मफलदायित्वलक्षणप्रभुत्वस्य भगवद्धर्मत्वेन प्रजापतिपशुपतित्वादिपदप्रापकत्वलक्षणस्य प्रभवनस्य भगवदधीनत्वादिति द्रष्टव्यम् । **विश्वाधिकः** । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्युक्तरीत्या **विश्वस्य**

---

ननु महोमहीधरमहार्णवादीनां स्वर्गनरकाद्यनन्तलोकानाञ्च सृष्टिकर्ताऽप्येक इति दुरभ्यु-पगमम् ; अल्पेऽपि कार्येऽनेकपुरुषसाहायकसव्यपेक्षताया एव सर्वत्र दृष्टेः । एवंसति का कथा सर्वेषां सृष्टौ स्थितौ संहारे चैकः कर्तेति इति शङ्काम् , एकस्यैव सर्वसृष्टिकार्यार्थपरिकरसंपत्ति-प्रदर्शनेन परिहर्तुं **विश्वत** इति मन्त्रः । **बाहुभ्यां संयोजयती**ति देवमनुष्यादिसृष्टिरुच्यते ; पद्भिः संयोजयतीति तिर्यक्सृष्टिः । एवञ्च वाक्यद्वित्वात् क्रियापदावृत्तिरस्तीति ज्ञापनाय **सामि-**त्युपसर्गस्य द्विः प्रयोग. । अथवा द्वितीयं समिति **जनयन्** इत्यनेन संबध्यते । **तैत्तिरीय-नारायणे**ऽपि एतदर्थो द्रष्टव्यः । (३)

एवं तावत् सर्वकारणस्यैकत्वं प्रतिबोध्य तस्य मोक्षप्रदत्वमुक्तम् । अथ मोक्षहेतुबुद्धि-प्रदत्वमपि तस्यैवेति प्रार्थनामन्त्रमुखेन ज्ञाप्यते । सर्वकर्तुरेकत्वस्य प्रागावेदनात् सृष्टिमात्रकर्तृतया प्रसिद्धस्य हिरण्यगर्भस्य सर्वकर्त्रभेदायोगात्, हिरण्यगर्भं जनयित्वा तन्मुखेन देवानां जनकत्वात् सर्वकर्तृत्वमित्येव वक्तव्यमिति हिरण्यगर्भजनकत्वमप्याक्षिप्तमधस्तात् । एवं देवप्रभवत्वेन हिरण्य-गर्भजनकत्वेन मोक्षप्रदत्वादिना च विशिष्टम् , अत एव विश्वाधिकं **य** इत्यादिनाऽनूद्य, तस्य शुभधीसंकल्पकत्वमुच्यते । अत इहापि रुद्रपदमुद्देश्यकोटिनिविष्टत्वात् न रुद्रदेवतात्वविधायकम् ; किं तु पूर्वोक्तार्थकं सत् हिरण्यगर्भजनकत्वेन प्रमाणान्तरप्रसिद्धदेवतापरम् । **प्रकर्षेण भवती**ति । भवनमिदं देवानाम् । भगवद्गतं तु प्रभवनमन्यदित्याह **प्रकर्षेणे**ति । **प्रभवनस्य भगव-**

**हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥**

**या ते रुद्र शिवा तनूरघोरा पापकाशिनी ।**
**तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि ॥ ५ ॥**

**यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।**
**शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ६ ॥**

---

सर्वस्यापि तदेकदेशैकदेशतया तस्य विश्वाधिकत्वम् । संसाररुजां द्रावकतया रुद्रत्वम्, निरतिशयसार्वज्ञ्यादियुक्ततया महर्षित्वञ्च भगवतो युज्यते । एवम्भूतो भगवान्, 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृड्विश्वरूपः', 'तत्र ब्रह्मा चतुर्मुखोऽजायत', 'नारायणाद्ब्रह्माजायत' इत्युक्तरीत्या हिरण्यगर्भं सर्वेषां देवानां सृष्टेः प्राक् जनयामास । **सः** देवः परमात्मविषयतया शुभया बुद्ध्या योजयत्वित्यर्थः । (४)

'अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे । तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास' इत्युक्तरीत्या सौम्यदिव्यमङ्गळविग्रहविशिष्टतया भगवत्प्रकाशप्रार्थनामन्त्रमाह **या ते रुद्रे**ति । हे **रुद्र** संसाररुग्द्रावक! प्रसिद्धरुद्रव्यावर्तनाय तं विशिनष्टि **गिरिशन्ते**ति । गिरिशं तनोतीति गिरिशन्तः । रुद्रस्य स्रष्टेत्यर्थः । या शिवा अघोरा च **पापकाशिनी** पापकमशितुं शीलमस्या इति पापकाशिनी पापदाहिका वैष्णवी सात्त्विकी तनुः, तादृश्या **शन्तमया** सुखप्रदया अत्यन्तानुकूलया **तन्वा** विग्रहेण **अभिचाकशीहि** प्रकाशस्वेत्यर्थः । (५)

**यामिषुमि**ति । **गिरित्र** । **गीः** वेदान्तः । तत्र त्रायते पाल्यते प्रतिपाद्यते इति वेदान्त[1] प्रतिपाद्यत्वं **गिरित्र**शब्दार्थः । **गिरिशन्ते**त्यस्य पूर्ववदर्थः । हे गिरित्र! गिरिशन्त! ते हस्ते शिवां **यामिषुं बिभर्षि** यत् आयुधं बिभर्षीत्यर्थः । तामिषुम् **अस्तवे** — असु क्षेपे — मद्ब्रह्मज्ञानविरोधिक्षेपाय कुरु । गच्छतीति **जगत्** संसारपथचङ्क्रम्यमाणं [2]**पुरुषं मा हिंसीः** संसारान्धकूपपतितं मा कार्षीरित्यर्थः । (६)

1. तत्प्रतिपाद्यत्वं. 2. संसारचक्रभ्राम्यमाणं.

---

**दधीनत्वादि**ति । फलप्रदत्वरूपप्रभवनस्य तत्क्रियारूपतया तदिच्छाजन्यतया तदधीनत्वम् । (४)

मोक्षहेतुभूता बुद्धिः शुभेयं शुभाश्रयविग्रहविषयिणीति ज्ञाप्यते **या ते** इति मन्त्रेण । (५)

दिव्यमङ्गलविग्रहस्येव दिव्यायुधादेरपि ध्येयत्वम् । तेन ध्यायिनां दण्डनपरिहारेण परिपालनस्य कार्यत्वप्रार्थनामुखेन ज्ञाप्यते **यामिषुमि**ति । 'अस्तवे यां बिभर्षि, तां शिवां कुरु' इत्यन्वयेऽपि न दोषः । अपां पत्युः शत्रून् राम इव श्रिताहिंसनेन तद्विरोधिनः क्षिपेति यावत् । (६)

**ततः परं ब्रह्म परं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।**
**विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वा अमृता भवन्ति ॥ ७ ॥**

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।**
**तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ ८ ॥**

---

**ततः पर**मिति । उक्तप्रकारेण तत्प्रार्थनानन्तरम् **बृहन्तं** निरतिशयबृहत्त्वाश्रयम् अत एव परं **यथानिकायं** मशकमातङ्गादिशरीरानुरूप्येण सर्वभूतेषु अनुप्रविश्य अन्तर्यामितया वर्तमानम्, विश्वं व्याप्य स्थितं तमीश्वरं ज्ञात्वा मुक्ता भवन्तीत्यर्थः । (७)

तज्ज्ञानस्य मोक्षसाधनत्वमुक्त्वा इतरस्य तन्निषेधति **वेदाहमेत**मिति । प्रकृतेः परस्तात् ज्योतिः महापुरुषं (ज्योतिर्मयवपुषं ?) तमेव पुरुषं[1] विदित्वा **मृत्यु**शब्दितं संसारमतिक्रामति । **अयनाय** तत्प्राप्तये अन्यो मार्गो नास्ति । एतमर्थमहं **वेद** जानामि । अस्मिन्नर्थे विवादो नास्तीति मुनीनां परस्परं वचनमिदम् । (८)

1. नारायणं.

---

एवं प्रार्थनायां सत्यां मोक्षार्थध्यानं संपद्यत इति ज्ञाप्यते **तत** इति । गूढमित्यन्तर्व्याप्तिरुक्ता । **परिवेष्टितार**मिति बहिर्व्याप्तिः । **ततः** परमित्यस्य पूर्वश्लोकोक्तात् जगतः परमित्यर्थः शाङ्करभाष्ये । (७)

एवं ध्येयत्वेन कथितं परं ब्रह्म किं किञ्चिद्देवतारूपम्, उतान्यादृशम् । आद्ये का सा देवतेत्यत्राह **वेदे**ति । **एतम्** एतावत् ध्येयत्वेनोक्तमहं तमःपारवर्त्यादित्यवर्णमहापुरुषत्वेन वेदेत्यर्थः । पुरुषसूक्तानुवादोऽयमिति स्पष्टम् । तत्र च पुरुषः, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वेन वेदितः । पुरुषशब्दश्च तस्मिन्नेव प्रसिद्धः । तथाच स्कान्दे, 'यथा पुरुषशब्दोऽयं वासुदेवे प्रतिष्ठितः । तथा शङ्करशब्दोऽयं महादेवे प्रतिष्ठितः' इति । **मुनीनां परस्पर**मिति एतदध्यायान्तिममन्त्रानुसारेणोक्तम् । एवं सृष्टिस्थितिसंहारकारिणां ब्रह्मविष्णुरुद्राणां मध्ये विष्णोः लक्ष्मीपतेः पुरुषशब्दार्थस्यैव परब्रह्मत्वं प्रतिबोध्य, 'चतुर्मुख एव वा रुद्र एव वा तुल्यनयेन परं ब्रह्म भवतु; त्रितयोत्तीर्णमन्यद् वा त्रितयहेतुः । तथाच तस्यैकस्य कारणस्य ध्यानादस्तु मुक्तिः' इत्याक्षेपं क्षिपति **तमेवे**ति । विष्णुपरब्रह्मणोरेवैक्यम्, नान्यथा । अतः चेतनान्तरं सर्वकारणं न मन्तव्यम्, नापि मुक्तिप्रदम् । अतो वासुदेव एव परदेवतेति । अत्र **तमेवे**ति तच्छब्दोपर्येव एवकारश्रवणात् विदित्वैवेत्यश्रवणात् स एव पन्थाः, नान्यश्चेतन इत्येव प्रतीयते । उक्तञ्चेदं **निक्षेपरक्षायाम्** । 'महापुरुषस्य वेदनमेव मोक्षसाधन'मिति **पराधिकरणभाष्य**मप्यत एव महापुरुषस्यैव वेदनमित्येतदर्थपर्यवसायीति सुवचम् । पूर्वापरभाष्यसंदर्भः **टीका** च तदेव

**यस्मात् परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९ ॥**

नन्वात्मज्ञानस्यैव, 'तरति शोकमात्मवित्' इति मोक्षहेतुत्वमुच्यते । कथमादित्यवर्णविग्रहपुरुषज्ञानस्येत्याशङ्क्य, अस्यैव पुरुषस्य[1] व्यापकत्वादात्मत्वमपि तस्यैवेत्याह — **यस्मा**दिति । "तथान्यप्रतिषेधात्" इति सूत्रे, "यस्मादपरं परं नास्ति । केनापि प्रकारेण उत्कृष्टं नास्तीत्यर्थः" इति भाषितम् । व्यासार्यैश्च, "यस्मादित्यस्य परमित्यनेनान्वयोऽस्तु । यस्मादुत्कृष्टं नास्तीत्यर्थः" इत्याशङ्क्य, "तथासति अपरमित्यस्य वैयर्थ्यप्रसङ्गात् । न च परञ्चापरञ्च नास्तीति उत्कृष्टापकृष्टवस्तुनिषेधकत्वं शक्यशङ्कम् — नञ आवृत्तिप्रसङ्गात् । अतो **यस्मा**दित्यस्या**पर**मित्यनेनैवान्वयः । यस्मादन्यत् सर्वोत्कृष्टं नास्तीत्यर्थाश्रयणे तदन्यस्योत्कृष्टस्य वस्तुन एवाभावात् समाभ्यधिकनिषेधः फलती" ति वर्णितम् । यदपेक्षया अतिशयेनान्तःप्रवेशयोग्यं वस्तु नास्ति, यस्माच्चाधिकं विवृद्धं किमपि वस्तु नास्ति, यश्चाप्राकृते लोके अवाप्तसमस्तकामतया ब्रह्मादिकमपि तृणीकृत्य वृक्ष इवाप्रणतस्वभावस्तिष्ठति, तेन, 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने' इत्युक्तप्रकारेण **पुरुष**शब्दितेन भगवता वासुदेवेनेदं सर्वं व्याप्तमित्यर्थः । अनेन, 'जीवाम केने' ति चिन्ताया निस्तारो दर्शितः । **पूर्ण**मिति व्याप्त्या आत्मत्वे कथिते देहभूतस्य जीववर्गस्य तदधीनजीवनत्वमुक्तं भवति । (९)

1. पुरुषव्यापकत्वात् ।

---

संगच्छते । तावता वेदनातिरिक्तस्यानुपायत्वासिद्धिरिति तु न । 'तमेवं विद्वानमृत' इति एवकाररहितपुरुषसूक्तवाक्ये तद्विलक्षणासंभवात् । उभयोरैकार्थ्यौचित्येऽपि, 'स एनमविदितो न भुनक्ती'-(३.४)ति बृहदारण्यकवाक्यादितः तत्सिद्धेः । एवंसति अत्र, **तज्ज्ञानस्य मोक्षसाधनत्वमुक्त्वा इतरस्य तत् निषेधती**त्यवतरणभाष्यमपि तदभिप्रायमेव ग्राह्यम् । यद्वा प्रकृतश्रुतावपि वेदनविषयत्वविशिष्टमहापुरुषान्यस्य पथित्वनिषेधे प्रकृतपुरुषव्यतिरिक्तस्यानुपायत्ववत् वेदनातिरिक्तविशिष्टतया महापुरुषस्याप्यनुपायत्वावगमात् महापुरुषवेदनान्यस्यानुपायत्वसिद्धिरपीत्याशय इति । (८)

ननु तमःपारवर्तिन आदित्यवर्णविग्रहावच्छिन्नस्य पुरुषस्य तमोऽन्तर्गतविश्वात्मकचिदचिद्विशिष्टत्वायोगात् तस्य पूर्वोक्तब्रह्मभिन्नदेशविशेषस्थायिपरिच्छिन्नव्यक्तिविशेषस्योपासनादमृतत्वमिति कथमित्यत्र, पूर्वं **महान्त**मिति पदवेदितस्यातिसूक्ष्मत्वसर्वव्यापित्वे प्रदर्श्य, 'तदतिरिक्तं पूर्वोक्तं ब्रह्मे'ति मतिरपाक्रियते **यस्मा**दिति । प्रपञ्चकारणस्य मोक्षस्थानाधिपतेश्चैकत्वे हि कारणस्य मोक्षप्रदत्वं सुस्थम् । अतः स एवायमिति भावः । **पूर्णं पुरुषेण सर्व**मिति पुरुषशब्दव्युत्पत्ति-

**ततो यदुत्तरतरं तदरूपमनामयम् ।**
**य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति ॥ १० ॥**

---

यस्माद्धेतोः पुरुषापेक्षयोत्कृष्टं वा समं वा नास्ति । तस्मात् तदेव सर्वोत्तरं कर्मकृतरूपरहितं तत्कृतामयशब्दिततदुःखशून्यञ्च । तज्ज्ञानमेव मोक्षसाधनमित्युपसंहरति ततो यदिति । "तथान्यप्रतिषेधात्" इति सूत्रे, 'ततो यदुत्तरतरमिति पूर्वनिर्दिष्टात् पुरुषात् अधिकं वस्तु न प्रतिपाद्यत' इत्युक्त्वा, तर्हि, 'ततो यदुत्तरतर' मिति किमुच्यत इति परिचोद्य, "पूर्वत्र, 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये' ति परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनम्; नाऽन्योऽमृतत्वस्य पन्था इत्युपदिश्य, तदुपपादनाय, 'यस्मात् परन्नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व' मिति पुरुषस्य परत्वं तद्व्यतिरिक्तस्य परत्वासंभवञ्च प्रतिपाद्य, 'ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ती" ति पूर्वोक्तमर्थं हेतुतो निगमयति । यत् उत्तरतरं पुरुषतत्त्वम्, तदेवारूपमनामयं यतः, ततो ये

---

रपि दर्शिता । आदित्यवर्णविग्रहरूपपुरुषाकारत्वमपि तस्यैव । 'पूस्संज्ञे तु पुरे तस्मिन् शयनात् पुरुषो हरिः' इति सर्वव्यष्टिशरीरानिविष्टतया, 'स यत् पूर्वोऽस्मात् सर्वस्मात्, सर्वान् पाप्मन औषत् तस्मात् पुरुषः' इति सर्वपूर्ववर्तित्व-सर्वपाप्मप्रदाहकत्वरूपकारणत्वमोक्षप्रदत्वशालितया च पुरुषत्वमपि तस्यैवेति । मन्त्रोऽयं मुण्डके, तैत्तिरीयेऽपि च । (९)

'ननु विग्रहपरिच्छिन्नत्वोक्त्या कर्मवेष्टितत्वावगमादन्य एव उपास्यः' इति शङ्काऽपि उक्तार्थपरिशीलने स्वयं शाम्यतीति दर्शयन् निगमयति तत इति । एवं मोक्षस्थानस्थितस्यैव सर्वव्यापितायाः व्युत्पादितत्वात् आदित्यवर्णत्ववर्णनेन कर्मकृतनिकर्षलेशस्याप्यभावस्य सुगमत्वात्, तत एव तदन्यस्य सर्वस्य कर्मकृतसामयशरीरपरिच्छिन्नताया अपि व्यञ्जनात् यत् उत्तरत्वेन त्वदभिमतं ब्रह्मशिवादि, ततोऽप्युत्तरतरं तमःपारवर्ति तदरूपमनामयञ्च, अन्यत्तु सामयरूपमिति, तदुपासन एवामृतत्वम्; तदन्यस्य कर्मतन्त्रस्य दुःखमयस्योपासने तु दुःखप्राप्तिरेवेत्यर्थः । **अरूपमनामयमित्यस्य**, 'कर्मकृतदेहतत्कृतदुःखविरोधि; हेयप्रतिभटमित्यर्थः' इति **पराधिकरणटीका** । आमयस्यात्मसंबन्धित्वप्रसक्त्यभावात् इहामयशब्दितं दुःखम् ॥ एवं संद-

**सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।**
**सर्वव्यापी स भगवाँस्तस्मात् सर्वगतश्शिवः ॥ ११ ॥**

---

एतत् पुरुषतत्त्वं विदुः, त एवामृता भवन्ति; अथेतरे दुःखमेवापियन्ती''ति भाषितम् । अत्र **तत**श्शब्दः पूर्वोक्तहेतूपसंहारार्थः । न तु पूर्वप्रतिपादितपुरुषस्य प्रतिपिपादयिषितवस्त्वन्तरावधित्वप्रतिपादनपर इति द्रष्टव्यम् । केचिदाचार्याः, "तेनेदं पूर्णमिति पूर्ववाक्ये **सर्वमिद**मिति प्रथमान्तनिर्दिष्टतया प्रधानस्य जगत एव, **ततो यदुत्तरत**रमित्यत्र तच्छब्देन ग्रहण'' मित्यूचुः । तदपि युक्तमिति **वेदार्थसंग्रह-व्याख्याने**ऽप्युक्तम्[1] । (१०)

ननु 'तेनेदं पूर्णं पुरुषेण सर्व' मिति सर्वशरीरसंबन्धावगमात् तस्यापि हेयसंबन्धोऽवर्जनीय इत्याशङ्क्याह **सर्वानने**ति । सर्वशरीराणां तच्छरीरत्वेन सर्वाननशिरोग्रीवत्वम्; सर्वभूतहृदयगुहाश्रयत्वात् सर्वभूतगुहाशयत्वम् । अनेनाऽऽकारेण[2] सर्वव्याप्यपि यतो भगवान्, [तस्मात्?] 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभि' रिति हेयप्रतिभटत्ववाचिभगवच्छब्दार्थतया तस्य पुरुषस्य सर्वगतत्वेऽपि शिवत्वमेव; न त्वशुभसंबन्ध इति भावः । (११)

1. व्याख्यानोक्तम् . 2. कारणेन.

---

भाष्यानुसारात् **तत** इत्यस्य हेतुपरत्वं भाष्योक्तं सुस्थम् । अन्यदप्यप्रतिषिद्धमनुमतमाह **केचिदि**ति । जगतः प्रथमान्तनिर्दिष्टत्वादव्यवहितत्वाच्च तच्छब्दस्य तत्परामर्शित्वस्य युक्तत्वं कैश्चिदुक्तम्, उपपन्नमिति तत्र स्वीकृतमिति । **व्याख्याने**ऽपीति **अपि**ना हेतुपरमूलव्याख्यानपरैरपि (रेव) अस्यार्थस्योक्तत्वात् मूले इदं प्रतिषेध्यं न भवतीत्युपदर्श्यते । तदयमर्थः – **उत्तरतर**मित्यस्य अतिशयितोत्तरमित्यर्थात् जगदपेक्षयाऽतिशयितोत्तरत्वोक्त्या अनतिशयितमुत्तरं किञ्चिदस्तीत्यवगमनात्, ब्रह्मरुद्रादेरपि जगदन्तर्भूततया तत उत्तरमित्यनेन, 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इति प्रसिद्धनित्यमुक्तग्रहणम् । अतिशयितमुत्तरं तु परं ब्रह्म स उत्तमः पुरुष इति । (१०)

ननु विग्रहवतोऽनामयत्वमसंभवीत्याशङ्कायाम्, 'तस्य विग्रहस्येव विश्वस्यैव तच्छरीरत्वाविशेषात् तद्विग्रहानङ्गीकारेऽप्याशङ्का जागर्ति । एवञ्च तत्परिहार एवैतत्परिहारोऽपि । तत्र चैवं परिहार इत्युच्यते **सर्वानने**ति । सर्वेषामाननशिरोग्रीवादयः अस्याप्याननशिरोग्रीवादयो भवन्ति । तत्र हेतुः जीवात्मन इवास्यापि तत्तद्भूतगुहाशयत्वम् । न केवलमेतत्; सूक्ष्मतया कार्यकारणसर्वव्यापितया आननादिरहितस्थावरादिशरीरकत्वमप्यस्ति । एवञ्च, 'एको यस्यास्ति देहः, स भवति विविधानन्तदुःखैकभोक्ता; विश्वं देहः प्रभोश्चेत्, स कथमतिपतेत् विश्वदुः-

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ।**
**सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते ॥ १६ ॥**
**धाता पुरस्ताद् यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।**

---

पुरुषसूक्तसूक्तरूपं को वेत्ति? तत्राह **वेदाहमेत**मिति । सहस्रशीर्षमि ( र्षा इ ) त्युक्तमेतं महान्तं पुरुषमहं **वेद** जानामि । नान्यः कश्चित् **वेद** वेत्तीति वेदानामात्मनो वचनम्; अस्य सूक्तस्य ऋषेर्नारायणस्य वाक्यं वा । किंस्वरूपम्? **आदित्यवर्णम्** । 'आदित्यवर्णं पुरुषं वासुदेवं विचिन्तयेत्' इति मोक्षधर्मे । कावस्थितं वेत्ति? (त्सि)? **तमसस्तु पारे** । **तम**श्शब्देन प्रकृतिरुच्यते । प्रकृतेः परस्तात् स्थितं वेत्ति । तमसः परमो धातेत्यस्ति । कियांश्चायम्? **महान् पुरुषः** । [कदा?]। **सर्वाणि रूपाणि विचित्य धीरः** । सृष्टानां चराचरात्मकानि रूपाणि **विचित्य** समुत्पाद्य, अथवा वैविध्येन च बुध्वा तेषां नामानि च कृत्वा तैः तान्यभिवदन् **धीरः** धिया रममाणः परमविद्वान**भिवदन्** तैस्तैर्नामभिरभिमुख्येन वदन् यदा आस्ते, तदा तं पुरुषं वेत्ति । इतश्चाहं वेद्मि ।

कोऽसावेवंविधः पुरुषः? कायमास्ते? विशदं ब्रूहि [ इति? ] चेदहमप्यविप्रकर्षेण जानामि; न वेद्मीत्याह **धाता पुरस्ताद्यमुदाजहारे**ति । पूर्वस्मिन् काले चतुर्मुखो यम् आत्मनः कारणभूतमुदाजहार='तमब्रवीत् त्वं पूर्वं समभूः । त्वमिदं पूर्वः कुरुष्वे'त्यादिषूदाहृतवान् । तथा **शक्रः प्रविद्वान्** प्रकृष्टज्ञानः शक्रः विग्रहवति वासुदेवेऽधिगतपुरुषोत्तमत्वज्ञानः इन्द्रो यं परमकारणत्वेनोदाहृतवान् इन्द्रप्रतर्दनसंवादे, 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगामे'त्यादौ श्रुतौ । तथा **प्रदिशश्चतस्रः** । प्रदिशश्च यमुदाजह्रुः । **दिक्छ**ब्देन दिग्वर्तिनो ज्ञानवन्त उच्यन्ते । दिगधीनाः पुरुषा उपलभन्ते । तथा श्रीरामायणे विश्वामित्रवचनम्,

'अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।
वसिष्ठोऽपि महातेजाः ये चेमे तपसि स्थिताः' इति ॥

तत्रैव रावणवधानन्तरं रामं प्रति ब्रह्मणो वाक्यम् । यथाह —

'भवान्नारायणो देवः श्रीमान् चक्रायुधो विभुः ।

**तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय ॥ १७ ॥**
**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**

---

एकशृङ्गवराहस्त्वं भूतभव्यसपत्नजित् ।
अक्षरं ब्रह्म पारं त्वं मध्ये चान्ते च राघव ।
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ।
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ।'

अत्रैव लक्ष्मणं प्रति दशरथवाक्यम्, यथा —

'एतत्तदुक्तमव्यक्तमक्षरं ब्रह्म निर्मितम् ।
वेदानां हृदयं सौम्य गुह्यं रामः परंतपः ।

अत्रैव मन्दोदरीवाक्यम्, यथा —

'व्यक्तमेष महायोगी परमात्मा सनातनः ।
अनादिमध्यनिधनो महतः परमो महान् ।
तमसः परमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः' इति ।

वेदोऽपि स्वकण्ठेन महान्तं पुरुषं वक्तुमशक्नुवन् तदीयानि चिह्नानि आहेत्यवगन्तव्यम् ।

**तमेवं विद्वानमृत इह भवति** । श्रुतिर्वदति । तं परमं पुरुषं **एवं** जगतामादिकारणं **विद्वान्** जानन् **अमृत इह भवति** इहैव जन्मनि अमृतो भवति । संसारबन्धान्मुक्तो भवति । **नान्यः पन्था अयनाय विद्यते** । **अयनाय** मोक्षाय एवंविधपुरुषज्ञानादन्यः पन्था न विद्यते ।

'अयनं निलये मार्गे मुक्तौ चापि प्रकथ्यते' इति निघण्टुः ।

इदं पुरुषसूक्तप्रतिपाद्यपुरुषज्ञानं मोक्षोपाय इति ।

उपक्रान्तं सृष्टियज्ञमुपसंहरति **यज्ञेन यज्ञमयजन्त देवाः** । यज्ञसाधनभूतचतुर्मुखाख्यपशुहविषा **यज्ञमयजन्त** सृष्टियज्ञमकुर्वत — धातुरनुवादः — **देवाः** साध्याः देवाः तदिन्द्रियाणि वा । **तानि धर्माणि प्रथमान्यासन्** । (?)सृष्टियजनाग्निदेवानां सर्गविषया व्यवहाराः **धर्माणि प्रथमानि** मुख्यानि लोक-

**ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ॥ १८ ॥**

॥ श्रीरस्तु ॥

---

श्रेयस्साधनान्यासन् । मोक्षहेतुतया प्रधानभूता इत्यर्थः । **ते ह नाकं महिमानः सचन्ते** । मह पूजायाम् । मनिन्प्रत्ययः । पूजयन्तः = भगवन्तं नारायणमर्चयन्तः नाकं सचन्ते । कमिति सुखनाम । अकं दुःखम् । तत् यत्र नास्ति, तन्नाकं परमव्योम प्राप्तवन्तः । भगवच्चोदितो ब्रह्मा लोकसृष्टिं तदाराधनं बुद्ध्याऽनुष्ठि (ष्ठाय त ?) तो वैकुण्ठख्यं परं पदं प्राप्तवान् । **असचन्त** प्राप्तवन्तः । बह्वृचपाठे अडागमाभावश्छान्दसः । तैत्तिरीयपाठे भूतार्थे । 'नाकोऽम्बरेऽपि च स्वर्गे परमव्योम्नि च स्थितः' इति । 'एको विष्णुर्जगत्स्वामी वासुदेवः सनातनः' इति श्रीवाराहेऽप्यस्ति । **यत्र पूर्वे साध्याः सन्ति देवाः** । यत्र नाके **पूर्वे** पूर्वस्मिन् **साध्या** नाम **देवाः** सूरयो वर्तन्ते ।

[1] पतिमिति .... .... .... देवमेवैतत्सूक्तं व्याचक्रिरे । **तस्मात् विराडजायत** । विराडाख्यः प्रजापतिरजायत । **विराजो अधि पूरुषः** । वैराजो मनुर्नाम पुरुषः । **यत् पुरुषेण हविषा देवाः** । **देवाः** मन्वादयः जगत्सिसृक्षवः । **तेन देवा अयजन्त** — साध्यानामृषीणां देवानाञ्च पुराकल्पे ध्यानमययज्ञानुष्ठानानुकीर्तनम् । **तस्माद्यज्ञा**दिति ध्यानमयात् यज्ञात् जगदुत्पत्तिवादः । **यत् पुरुषं व्यदधुः** । **पुरुषं** परमपुरुषं यं सहस्रशीर्षत्वादिविशेषणविशिष्टं जगन्मूलकारणत्वे व्यदधुः, तं **कतिधा व्यकल्पयन्** कियत्प्रकारं व्यरूपयन्त देवाः । प्रश्नविवरणमुत्तरञ्च पूर्ववत् । **तथा लोकाँ अकल्पयन्** । ब्राह्मणादीनां भूम्यादीनां लोकानाञ्च परमपुरुषमुखाद्यवयवेभ्यः सृष्टिर्यथा कथिता, तथा देवा **अकल्पयन्** निश्चितवन्तः । एवं सृष्टान् लोकान् व्यनक्ति .... **यज्ञेन यज्ञमयजन्त** ध्यानमयेन जीवात्मयज्ञेन यज्ञात्मानं नारायणमयजन्त देवाः । **तानि धर्माणि प्रथमान्यासन्** । एवं कृताः ध्यानमययज्ञाः मोक्षहेतुतया मुख्या धर्मा आसन् । तेन देवा आ (?) याजिनो .... नाकं वैकुण्ठाख्यं प्राप्तवन्त इति ।

1. पुरुषसूक्ते तत्रतत्र व्याख्यान्तरोक्तमर्थान्तरमनुवदति विमर्शार्थम् ।

एतद्ब्रह्मयज्ञं (?) तद्व्याख्यातृभिर्व्याख्यातं श्रुतिस्मृतीतिहासपुराणैः नारायणाण्डोत्पत्तिमण्डाद्ब्रह्मोत्पत्तिं प्रतिपादयद्भिः अनादृतमित्यनादरणीयम् ।

अतोऽयमेव व्याख्यानप्रकारः प्रशस्त इति ।

---

अत इति । सर्ववेदनिदिष्टे सर्ववेदाध्ययनफलप्रदे सर्वसारभूते नित्यब्रह्मयज्ञोपयुक्ते पुरुषसूक्तेऽस्मिन् आदरमतिशयितं वहन्तो महर्षयो विविधं व्याख्यानोपबृंहणमकुर्वन् । एवं मुद्गलोपनिषदादयः श्रुतयः श्रीपाञ्चरात्रग्रन्थाश्चैतदर्थविशदीकरणैकपरा इति चेतनानां विदितमेव । अत एवार्थवर्णनप्रणालिकाः विभिन्नाः प्राप्ताः । सर्वथा श्रीमतो नारायणस्य भगवतः पुरुषोत्तमस्य पारम्यमत्र प्रस्फुटमावेद्यत इत्यत्र सर्वेषामैकवाक्यमेव । तत्तदभिमतयोजनभेदपर्यालोचनया वाक्यानामर्थभेदस्य व्यक्तत्वेऽपि तद्योजनादर्शितः सर्वोऽप्यर्थः अबाध्यत्वेन संमन्तुमर्ह एव । तत्र प्रमेयांशानामनेकत्वात् वाक्यानाञ्चाल्पसंख्यत्वात् तेषां सर्वेषामत्र वाक्येषु निवेशप्रदर्शनस्याशक्यत्वात्, सकृत्प्रयुक्तस्य वाक्यस्यानेकार्थकल्पना न युक्तेत्याशयाच्च स्वस्वाभिमतमेकैकमर्थं केचित् प्राचीकशन् । अन्ये पुनरेकतमनिष्कर्षे उदासीनाः बहूनप्यर्थान् एकैकस्मिन् वाक्ये, एवं वा, एवं वेति विकल्प्य समघटयन् । यथा—

प्रकृतौ परिभ्रमतां जीवानामनन्तत्वात् एषां शीर्षादिकमादायैव **सहस्रशीर्षत्वादिकं** भगवतः केचिददर्शयन् । सर्वशरीरिणस्तस्य न तन्न घटते । स्वयमेव सहस्रशीर्षादिशालि रूपं दिव्यं बिभर्तीत्यन्ये । तदपि विश्वरूपदर्शिनो भगवतः सुस्थं स्थितमेव । शीर्षाद्यभावेऽपि शीर्षादिकार्यकरणशक्तत्वात् सहस्रशीर्षेत्यादिव्यपदेश इति परे । तदपि, 'अपाणिपादो जवन' इत्यादिश्रुतिबलात् स्वीकर्तव्यमेव । एवं **दशाङ्गुल**पदेऽपि सामान्यत आनन्त्यं विवक्षन्ति केचित् । दशविधवस्तुव्यापनमेव भगवति निरूपयन्त्यन्ये । **पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि** इत्यत्र चातुर्व्यूहविवक्षां विनैवार्थं वर्णयन्ति केचित् । अन्ये तद्विवक्षयैव । **विराडजायत, विराजोऽधिपूरुषः** इत्यत्र प्रकृतिजीवाविर्भाववर्णनं केषाञ्चिदभिमतम् । अनिरुद्धचतुर्मुखयोराविर्भावमन्ये । ब्रह्माण्डब्रह्मणोरुत्पत्तिं परे । ब्रह्मणो मनोश्चोद्भवं परे । सर्वमिदं प्रमाणान्तरप्रमितमेव ।

अथ यो यज्ञः प्रस्तुतः, **यत् पुरुषेण हविषा देवा यज्ञमतन्वत**ेत्यादिना, स किमसौ वास्तवहोमसंवलित एव, उत ध्यानमय इति परामर्शे, **मुखादिन्द्रश्चाग्निश्चे**ति अग्नेरपि अन्याविशेषमत्र एवोत्पादनीयतया ध्यानमय एवायं युक्त इति कृत्वेव प्रायो ध्यानपक्षमेव परिगृह्णन्ति । बाह्ययागापेक्षया हार्दयागस्य विशेषतो भगवत्समाराधनत्वं व्यक्तमन्यत्र । ध्यानस्य ध्यातृसमवेतेन्द्रियसाध्यत्वात् **देव**शब्द इन्द्रियपर इति केचित् । नित्यसूरीणामपि अभिमानितया नियन्तृतायाः श्रीविष्णुपुराणादिप्रतिपन्नत्वात् नित्यसूरिविशेषा एव साध्या देवा इत्यन्ये ।

एवं तावत् तत्तद्ग्रन्थोक्तं सर्वमपि संकलय्य परामर्शे समादरणीयमेव भवेदिति नात्रैकस्मिन् पक्षे अभिनिविश्य पक्षान्तरस्य असत्त्वमाशङ्कनीयमिति विभावनमुचितं लक्ष्यते । एवं स्थिते यदिदं किञ्चिदिह प्रस्तुतमस्ति प्रकृतभाष्ये, किं सर्वमिदं तत्तदवयवविशेषेभ्य उत्पन्नतयेह वर्णितं

चतुर्मुखशरीरादुत्पन्नतया वर्ण्यमानं संमन्तव्यम्, उत परमपुरुषविग्रहादेवेति विवादे द्वितीयः पक्षो न ग्राह्य इति। अत्र किञ्चिद् वक्तव्यं लक्ष्यते—तत्रतत्र पक्षान्तराणामसत्त्वाभाववत् अत्राप्यसत्त्वाभावः संमन्यताम्। अतः साऽपि योजना कामं भवत्विति।

कल्पादौ चतुर्मुखशरीरात् विविधा वैकृतसृष्टिर्भवतीति श्रीविष्णुपुराणे (१.५.) प्रतिपादितमिति तत्र न संदेहः। तथाहि तत्र देवादिसृष्टिमुपवर्ण्य, 'एतानि सृष्ट्वा भगवान् ब्रह्मा तच्छक्तिचोदितः' इति तिर्यक्स्थावरसृष्टिं प्रस्तुत्य, तत्र कृतयुगस्य ध्यानप्रधानत्वेऽपि त्रेतायुगस्य यज्ञप्रधानत्वात् तदा ग्राम्यारण्यविभागोऽपि पशूनां तेन कृत इति कथयित्वा, 'गौरजः पुरुषो मेषश्चाश्वाश्वतरगर्दभाः। एतान् ग्राम्यान् पशूनाहुः आरण्यांश्च निबोध मे। श्वापदा द्विखुरा हस्तिवानराः पक्षिपञ्चमाः। औदका पशवः षष्ठाः सप्तमाश्च सरीसृपाः' इति ग्राम्यान् अन्यांश्च पृथक् परिगणय्य, तस्यैव चतुर्भ्यो मुखेभ्यः ऋगादिचतुर्विधवेदादिसृष्टिमभिधाय, 'नाम रूपञ्च भूतानां— देवादीनां चकार सः' इत्यादिनोपसंहृतम्। एवमपि तत्रैव, १-१२. ध्रुवस्तोत्रे पुरुषसूक्तार्थविवरणे परमपुरुषविग्रहादेव सर्वेषामुत्पत्तिरभिहितेति स्वरसतः प्रतीयते। तथाहि शंखप्रान्तेन स्पृष्टवन्तं धुरि प्रत्यक्षमागतं गोविन्दं ध्रुव एवं स्तौति—

'बृहत्त्वाद् बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम्।
तस्मै नमस्ते सर्वात्मन् योगिचिन्त्याविकारवत्।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
सर्वव्यापी भुवः स्पर्शादत्यतिष्ठद् दशाङ्गुलम्।
यद्भूतं यच्च वै भव्यं पुरुषोत्तम तद् भवान्।
त्वत्तो विराट् स्वराट् सम्राट् त्वत्तश्चाप्यधिपूरुषः।
अत्यरिच्यत सोऽधश्च तिर्यक्चोर्ध्वञ्च वै भुवः।
त्वत्तो विश्वमिदं जातं त्वत्तो भूतभविष्यती।
त्वद्रूपधारिणश्चान्तः सर्वभूतमिदं जगत्।'

'त्वत्तो ऋचः–', 'त्वत्तोऽश्वाश्च–', त्वन्मुखाद् ब्राह्मणाः–', 'अक्ष्णोः सूर्योऽनिलः प्राणात्', त्वत्तः सर्वमभूदिदम्' इति। अत्र साक्षात् गोविन्दः सर्वत्र युष्मच्छब्दैरभिधीयते। अधिपूरुष इत्युक्तः अधिकारिपूरुषः चतुर्मुखस्तु परोक्षतो निर्दिश्यते। तत्कार्यकथनावसरे च 'अत्यरिच्यत सोऽधस्तात' इत्येवम्। त्वद्रूपधारिण इत्यर्थस्य च, 'तस्य चतुर्मुखस्यापि जगदिदमन्तश्चेत्, किंपुनस्तवेति भावः' इति श्रीविष्णुचित्तीये विवरणं कृतम्। तथाच त्वद्रूपधारिणस्तस्याङ्गेभ्य इत्यनुक्त्वा त्वत्त इत्येव सर्वत्र निर्देशः सर्वस्य परमपुरुषजन्यत्वं दर्शयति। अवान्तरसर्गेषु चतुर्मुखकर्तृकसर्वसृष्टिसद्भावेऽपि आदिसृष्टौ भगवानेव सर्वं सृजतीति **नामसहस्रभाष्येऽप्युक्तम्**। श्रीदेशिकचरणाभिमतश्चेदमित्यादिकमिह वक्तव्यं **सुबालोपनिषत्परिष्कारे** (पु. २०१-२०२) अस्माभिरुक्तम्। यत्र मूलश्रुतिः चतुर्मुखकर्तृकसृष्टिपरैव भगवत्कर्तृकसृष्टिपराऽपि लक्ष्यत इति भङ्ग्या व्यञ्जयाम। **वेदान्तपुष्पाञ्जलावपीदं** द्रष्टव्यम्। अतोऽन्यादृशव्याख्यानमपि उपादेयमेव भवेदिति।

श्रीशास्त्रपुरुषसंहितायाम्, —

'सहस्रशीर्षा इत्यत्र सहस्रोऽनन्तवाचकः ।
अनन्तयोजनं प्राह दशाङ्गुलवचस्त्विदम् ॥
अत्र प्रथमया विष्णोर्देशतो व्याप्तिरुच्यते ।
द्वितीययाऽस्य विष्णोश्च कालतो व्याप्तिरीरिता ॥
विष्णोर्मोक्षप्रदातृत्वकथनं च तृतीयया ।
एतावानितिमन्त्रेण वैभवं कथितं हरेः ॥
एतेनैव च मन्त्रेण चतुर्व्यूहोऽपि भाषितः ।
त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम् ॥
तस्माद्विराडित्यनया पादनारायणाद्धरेः ।
प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥
यत्पुरुषेणेत्यनया सृष्टियज्ञः समीरितः ।
सप्तेऽस्य परिधयश्चापि समिधश्च समीरिताः ।
तं यज्ञमिति मन्त्रेण सृष्टियज्ञः समीरितः ।
अनेनैव च मन्त्रेण मोक्षश्च समुदीरितः ॥
तस्मादिति च सप्तर्चा जगत्सृष्टिः समीरिता ।
वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः ॥
यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरितः ।
य एवं तु विजानाति स हि मुक्तो भवेत्' इति ॥

तथा मुद्गलोपनिषदि पुरुषसूक्तस्य वैभवं विस्तरेण प्रतिपादितम् । सेयमुपनिषदुच्यते—[1] 'वामदेव आङ्गिरसः स्वपूर्वप्रज्ञासमन्वारब्धः अत्रिपत्न्या अनसूयाया गर्भ एव शयानो ब्रह्म वेदयाञ्चक्रे । स हि गर्भं पुरो हित्वा ब्रह्मलोकमुपचक्राम । मध्ये ध्यानमुपनिषद्युवाच । भगवांस्तु गर्भपञ्जरमेवाभिनिविशमानो विज्ञानब्रह्म जानासि

1. मुद्रितमुद्गलोपनिषत्कोशे अत्र च महान् पाठभेदः । अशुद्धयश्चोभयत्र ।

तोपाय: (?)। अकस्मात्किञ्चिद्विगतासंगस्सर्वैः वन्द्यमानोऽध्वनः पारमुपगच्छसि। तदेतदिहाश्चर्यम्, यद् बालस्य गुरुमनुपेयुषोऽधिगन्तुश्च भगवतोऽकस्मात् विशब्दो ब्रह्मप्रत्ययः; विपरीतस्य विपरीतम्। सोऽहं भगव उप त्वा सेदिवांश्चासीत्यादिभिश्चतुर्भिः खण्डैरिन्द्राय भगवान् ज्ञानमुपदिशन् पुनरपि सूक्ष्मश्रवणाय प्रणतायेन्द्राय परमरहस्यभूतं पुरुषसूक्तार्थं द्वाभ्यां खण्डाभ्यामुपादिशत्। तौ खण्डावुच्येते—

योऽयमुक्तः, स पुरुषो नामरूपज्ञानागोचरं संसारिणामतिदुर्ज्ञानं वेषं विहाय क्लेशादिसंसृष्टान् देवादीनुज्जिहीर्षुतया सहस्रावयवकल्याणं दृष्टिमात्रेण मोक्षदं वेषमाददे। तेन रूपेण भूम्यादिलोकजातं व्याप्यानन्तयोजनमत्यतिष्ठत्। स पुरुषो नारायणो भूतं भव्यं भविष्यच्चासीत्। स एव सर्वेषां मोक्षदश्चासीत्। स च सर्वस्मात् महिम्नो ज्यायानासीत्। स च ज्यायान् महापुरुषः आत्मानं चतुर्धा कृत्वा त्रिपादेन परमव्याम्नि भासते; इतरेण चतुर्थेनानिरुद्धेन नारायणाख्येन विश्वान्यासन्। स च पादनारायणो जगत् स्रष्टुं प्रकृतिमजनयत्। सा च प्रकृतिः ब्रह्माण्डभूता, यत्र स ब्रह्माणमजनयत्। स समृद्धकायस्सन् सृष्टिकर्म न जज्ञिवान्। सोऽनिरुद्धनारायणस्तस्मै सृष्टिमुपादिशत्, 'ब्रह्मन्! तवेन्द्रियाणि याजकानि ध्यात्वा जगत्कोशभूतं दृढग्रन्थिकळेबरं हविर्ध्यात्वा मां हविर्भुजं ध्यात्वा वसन्तमाज्यं ध्यात्वा ग्रीष्ममिध्मं ध्यात्वा शरदृतुं पुरोडाशं ध्यात्वा पृथिव्यप्तेजोवाय्वाकाशाहङ्कारबुद्धिं परिधिं ध्यात्वा पञ्च भूतानि तन्मात्राणि ज्ञानकर्मेन्द्रियाणि अन्तःकरणं चैकविंशतिं समिधं ध्यात्वा मध्येवाग्नौ त्वां योजय। मदङ्गस्पर्शनात् त्वत्कळेबरं बृंहिष्यति। ततः त्वत्कायात् सूक्ष्मसृष्टिहेतुभूतं पृषदाज्यं भविष्यति। सर्वाणि (?) निबिडाः पश्वाद्याः प्रादुर्भविष्यन्ति। ततश्चराचरं जगद्भविष्यति। एतेन जीवात्मनो योगेन मोक्षप्रकारोऽपि कथ्यत इत्यनुसंधेयम्— इति प्रथमः।

य इमं सृष्टियज्ञं जानाति मोक्षप्रकारञ्च, सर्वमायुरेति; अरोगश्च भवति; श्रीमांश्च भवति; पुत्रपौत्रादिसमृद्धो भवति। विद्वांश्च भवति। महापातकात् पूतो भवति। सर्वगमनात् पूतो भवति। कामक्रोधादिभिरबाधो भवति। सर्वेभ्यः पापेभ्यः पूतो भवति। इहैव जन्मनि पुरुषो भवति। तमेवं पुरुषसूक्तार्थमतिरहस्यं राजगुह्यं देवगुह्यं गुह्यादपि गुह्यतरं नादीक्षितायोपदिशेत्; नाप्रियवादिने;

नायज्ञशीलाय; नासंवत्सरवासिने; नासंतुष्टाय; नानधीतवेदाय गुरुरप्यदम्भनः शुचौ देशे पुण्ये नक्षत्रे प्राणान् आयम्य पुरुषं ध्यायन् उपसन्नाय शिष्याय दक्षिणे कर्णे सकृत् पुरुषसूक्तार्थमुपदिशेत्। न बहुशो वदेत्। यातयामं भवतीत्य....... कर्णमुपदिशेत्. एवं कुर्वाणोऽध्येताऽध्यापकश्च इह जन्मनि पुरुषो भवति—इति तृतीयः खण्डः ॥

* सहस्र — ईरिता ।

पूर्वस्मिन्ननुवाके मुमुक्षूपास्यं परं ब्रह्म अक्षरवाच्यः स एव परमेश्वर इति सादरमुक्तम् । अस्मिन् प्रसङ्गे सकलवेदान्तेषु कारणत्वेन ब्रह्माक्षरशिवशम्भुपुरुषहरिदेवादिसामान्यशब्देन प्रतिपादितस्य विशेषाकाङ्क्षया तत्तच्छब्दसमभिव्याहारेण नारायणं सविशेष इति .... .... .... प .... .... .... येन्तापेक्षितार्थनिर्णयाय नारायणानुवाके क्रियते । " लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि " इत्यस्मिन्नधिकरणे **भगवान् भाष्यकारो रामानुजमिश्रो** बहुभिर्न्यायकलापैरेवमुदीरितवान् ।

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥ [1]

**इति श्रीरङ्गरामानुजस्वामिविरचितं**

**पुरुषसूक्तभाष्यं संपूर्णम् ।**

**॥ शुभमस्तु ॥**

**येनोपनिषदां भाष्यं रामानुजमतानुगम् ।**
**रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥**

**॥ श्रीरस्तु ॥**

---

* एतदारभ्य न पुरुषसूक्तव्याख्यानम् । अथापि मातृकायां स्थितं प्रकाश्यते । एतद्ग्रन्थदर्शनात्, उपक्रमे **प्रसङ्गात् पुरुषसूक्तेति** वाक्यदर्शनाच्च पुरुषसूक्तव्याख्यानमिदमेतदीयग्रन्थान्तरमध्यनिविष्टमिति ज्ञायते । पुरुषनिर्णयादिग्रन्थवत् नारायणस्य पारम्यं स्थापयितुं प्रणीतः कश्चन प्रबन्ध एतदीयोऽयमिति विभाव्यते । लेखकैर्वा शुद्धमातृकानुपलम्भादिवशात् तालकोशे संकीर्णं कृतं भवेत् । अस्तु कथमपि । भाष्यं तु पुरुषसूक्तस्य लब्धं समग्रमिति संतोष्टव्यम् ।

अत्र **पूर्वस्मिन्ननुवाके** इति तैत्तिरीये नारायणानुवाकात् पूर्वोऽनुवाक उच्यते । तर्हि तैत्तिरीयव्याख्यानस्य कस्यचिन्मध्ये पुरुषसूक्तव्याख्यानं प्रासङ्गिकं घटितमिति भाव्यत इति चेत्—किमनेन निष्कर्षापर्यवसायिनोल्लेखेन ।

1. श्लोकोऽयमौचित्यात् योजितः ।

इत्थं पौरुषसूक्तभाष्यमुपलभ्यामृश्य, कोशे क्वचित्
निर्देशेन च रङ्गलक्ष्मणमुनेः कर्तृत्वमादृत्य च ।
ईशाद्यागममौलिभाष्यवदिदं सूक्तार्थसंवेदनं
साधु स्यादिति सज्जनप्रियधिया प्राकाश्यमानीयत ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
भाष्यं पुरुषसूक्तस्य संग्रहेण परिष्कृतम् ॥

इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतः
पुरुषसूक्तभाष्यपरिष्कारः ।
शुभमस्तु ॥

श्रीः
श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## द्वयोपनिषत्परिष्कारः

श्रीमत्त्रयीशिखरलक्ष्मणसंयमीन्द्रसेवात्तमन्त्रवर एष तदर्थवित्त्यै ।
श्रीरङ्गलक्ष्मणमुनेश्वरणाब्जसेवी दृष्टां द्वयोपनिषदश्च परिष्करोमि ॥

प्रपन्नजनसंतानकूटस्थश्रीपराङ्कुशमुनि-श्रीभगवन्नाथमुनिपरम्पराप्राप्तेषु प्रतितन्त्रेषु यदन्यतमं प्रपत्तिरूपं हितम्, तत्र करणमन्त्रतया तैरादृतं तावत् द्वयमिति मन्तरत्नम्। यत् खलु श्रीभगवद्रामानुजमुनिना गद्ये, 'अत्र द्वयम्' इति, 'येन केनापि प्रकारेण द्वयवक्ता' इति, 'द्वयमर्थानुसंधानेन सह सदैवं वक्ता' इति चाभ्यस्य निर्दिष्टमनन्तरैस्तत्संप्रदायप्रवर्तकैः सर्वतोमुखविहितपरश्शतव्याख्यामुखरितनिखिलदिङ्मुखं विजयते । यस्य खलु सकृदुच्चारणेन यथोपदेशकृतेन, विश्वामित्रोपदिष्टमन्त्रजपेन शुनश्शेफ इव पुरुषपशुः, सर्वोऽपि पुरुषो बद्धो भगवतः श्रीमतो नारायणस्य निरवग्रहेणानुग्रहेण नियतं बन्धाद् विमुच्यत इति रहस्यविदो निश्चिन्वन्ति, तस्यास्य मन्त्ररत्नस्य द्वयाख्यस्य प्रकाशिकेयं द्वयोपनिषत् ।

अस्य द्वयस्य विषये श्रुतिः प्रथमं प्रमाणं स्थितमिति श्रीदेशिकचरणैः श्रीमति रहस्यत्रयसारे संदर्शितमेव । यथा,–'सारानष्कर्षाधिकारश्लोके, 'उपनिषदमृताब्धेरुत्तमं सारमार्याः' इत्युपनित्सारत्वकथनात् अष्टाक्षरोत्तमश्लोकयोः अथर्वनारायण–गीतोपनिषद्गतत्ववत् द्वयस्यापि किञ्चिदुपनिषद्गतत्वमुदितम् । तदधिकारमध्ये च, 'द्वयमपि कठश्रुत्याद्युक्तरीत्या सकृत् स्वोच्चरणकर्तुः सर्वप्रकारेण कृतकृत्यताकरणचणप्रभावशाली' ति द्वयस्य कठश्रुतिगतत्वमभ्यधायि । तत्र सारास्वादिन्याम्, 'यः सकृदुच्चारः संसारतारको भवती' ति श्रुतिवाक्यमुपात्तम् । सारप्रकाशिकायाम्, 'तत् द्वयं सकृदुच्चारः संसारविमोचनं भवती' ति वाक्यानुपूर्वी गृहीता । द्वयाधिकारे चाचार्यैः, 'द्वयम् । इदं कठवल्ल्यां पृथक्पृथगुपदिश्य संमेल्यानुसंधेयतया विहित-

त्वात् भगवच्छास्त्रे श्रीप्रश्नसंहितादिषु वर्णोद्धारादीन्यपि विधाय प्रतिपादितत्वाच्च श्रुतिमूलतान्त्रिक-मन्त्रभूतम्। इदं पूर्वाचार्यवाक्यमिति केषाञ्चिदुक्तिश्च, आप्ता उपदेष्टार इत्यादरणार्थं वा, परमाचार्यः सर्वेश्वर एव भगवच्छास्त्रे समुपदिष्टवानित्यतो हेतोर्वा भवितुमर्हति ' इति अस्य कठवल्लीरूपश्रुतिगत-त्वमश्रावि। अत्र सारास्वादिन्याम्-कठवल्ल्यामष्टाक्षरप्रकरण एव द्वयस्य पूर्वखण्डमुद्दिश्य, 'पूर्णमद' इत्यादिकं पठित्वा, ' परमपुरुषार्थेच्छुः खण्डद्वयं संमेल्य सकृदुच्चारयेत् ' इति विहितत्वात् इति व्याख्यायि। सारप्रकाशिकायां विभज्योक्तिः मूलनिर्दिष्टा, " अथातः श्रीमद्द्वयोत्पत्तिः। वाक्ये द्वितीयः। षट् पदानि। अर्था दश। पञ्चविंशति अक्षराणि। पञ्चदशाक्षरं प्रथमम्। दशाक्षरम-परम्। नवाक्षरं प्रथमपदम्। द्वितीयतृतीयचतुर्था त्र्यक्षराणि। पञ्चाक्षरं पञ्चमम्। द्व्यक्षरः षष्ठः इत्यादिषु विभज्योक्तेः " इति मुखान्तरेण विवृता। तत्रोपात्तानि वाक्यानि सर्वाणि उपनिषद्गतानीति स्पष्टम्। तत्र श्रीप्रश्नसंहितादिगतवर्णोद्धारक्रमश्च सारास्वादिन्याम्, 'श्रीः प्रथमाक्षरम्। मकारो द्वितीयाक्षरम्' इत्यादिक्रमेणेति वाक्येन विशदितः। सारप्रकाशिकायां तत्र, " नवार्णं विद्धि हृदयं त्रितयार्णं शिरो मतम्। शिखायै त्र्यक्षरं विद्धि कवचं तद्वदेव हि। अस्त्रं पञ्चाक्षरं नेत्रं द्व्यक्षरं परिकीर्तितम्। श्रीमच्छब्दात् परे युक्तं नारायण इतीष्यते। तत्परे चरणौशब्दः तत्परे शरणं तथा। प्रपद्ये तत्परे युक्तं नमश्शब्दमतः परम्। श्रीपते च तथा युक्तं परे नारायणाय चेति मन्त्रोद्धारक्रमोक्तेश्च " इत्युक्तमस्ति। अत्र मन्त्रानुपूर्वी स्पष्टा। परंतु उत्तरखण्डे नमश्शब्दः प्रथममिति अत्र प्रतीयते। श्रुतिमनुसृत्य नमश्शब्दस्यान्ते पाठः साम्प्रदायिक इति स्थैव भाव्यम्।

एवं श्रीप्रश्नसंहितादिवत् श्रुतेरपि दर्शितत्वात्, सा च श्रुतिः कठश्रुतिः, कठवल्लीश्रुतिः इत्यवगमनाच्च द्वयोपनिषदियं यज्ञोपवीतमन्त्रादिवत् श्रुतिरेवेत्यवसीयते। पूर्वापरानुपूर्वी-साहित्येनाध्ययनदर्शनात्तु खिलश्रुतिः। तर्हि किं या प्रसिद्धा कठोपनिषत् तत्रैवेयं निविष्टा समुत्सृष्टाध्ययनमा आहो अन्यैवेति विमर्शे, उपनिषत्स्वपि तत्रतत्रान्यान्यानुपूर्वीदर्शनात् प्रथमं पक्षमपि केचित्तु मन्येरन्। परंतु अष्टाक्षरप्रकरणस्यापि कठोपनिषन्निविष्टतायाः सारास्वादिनीतो-ऽवगमात् एकस्यामेव शाखायामनेकेषां खण्डानामुपनिषत्त्वेन परिगणनस्य ऐतरेयतैत्तिरीयादौ सर्वत्रोपलम्भात् श्रूयमाणप्रसिद्धकठोपनिषदानुपूर्वीभङ्गं विनैव कठवल्लीरूपोपनिषदि पूर्वं वा पश्चाद्वा व्यवधानेन। अव्यवधानेन वा अष्टाक्षरसंदर्भनिर्दिष्टेयमधीता सम्प्रति उत्सृष्टादशाध्ययनेति द्वितीयपक्षमेव बहुलं रोचयेयुः।

आनुपूर्व्यध्ययनसंप्रदायभ्रंशे लेखकैर्बहुलं पाठपरिवर्तनमवशादपि कृतं भवतीत्येतदस्माभिः सर्वत्रानुभूतं श्रुतीरपि तादृशीरवश्यमेवास्कन्दति। अत एव हि दशोपनिषदतिरिक्तासूपनिषत्सु आनुपूर्व्यमत्यन्तं संदेहास्पदं सर्वत्र। अत इहोपलब्धासु मातृकासु पाठभेदो न विस्मयमावहति। परंत्वत्रैकं प्राचीनाचार्यप्रतिपादितविशेषप्रतिपत्तिः यत्र यत्र यादृशयादृशपाठादरणे सुलभा, तत्र तादृशपरिग्रहणं साम्प्रतमिति अत्यन्तविसजातीयो द्वितीयमातृकापाठोऽपि सौकर्याय परस्तात् प्रत्यक्षं विवरिष्यते। अथ संग्रहेण व्याख्यायते —

श्रीः

श्रीमते नारायणाय नमः

# द्वयोपनिषत् ।

(१)



## हरिः ओम्—अथातः श्रीमद्द्वयोत्पत्तिः ।

**अथात** इति । एवमेव अर्थविशेषप्रस्तावारम्भस्तत्रतत्रेति सर्वविदितम् । अस्याष्टाक्षरप्रकरणनिविष्टतायाः सारास्वादिन्यामभिहितत्वात् अष्टाक्षराधिगततत्त्वस्य पुरो विशेषव्युत्पादनार्थम्, अनुष्ठेयस्य हितस्यानुष्ठापनार्थञ्च मन्त्रोऽयं प्रस्तूयत इति संगतिप्रदर्शनमनेन क्रियत इति ज्ञायते । साम्प्रदायिकैश्चाष्टाक्षरविवरणत्वमस्य द्वयस्याभिमतं मन्त्रयोरुभयोरेकप्रकरणपतितत्वादिकमावेदयति । यथोक्तं श्रीमति रहस्यत्रयसारे, 'श्रीमदष्टाक्षरमन्त्रः शेषत्वैकरसस्वरूपोपायपुरुषार्थव्युत्पादनेनोपायाधिकारपूर्तिमुत्पादयति । एवम्भूतस्याधिकारिणः फलापेक्षापूर्वकोपायविशेषानुष्ठानप्रकारं द्वयं विशदं प्रकाशयति । मूलमन्त्रे प्रथमपदप्रथमाक्षरसंक्षिप्तं शरण्यपरतत्त्वं मध्यमतृतीयपदप्रतिपन्ने उपायोपेये च क्रमेण विशदयति द्वयम्' इति । यद्यपि द्वये प्रपद्येपदोत्तमपुरुषोक्तस्याधिकारिणोऽधिकारविशेषमुपायान्तरनैरपेक्ष्यं तथा नमश्शब्दसंक्षिप्तं विरोधिनिवृत्त्यंशञ्च व्यक्तयति गीताश्लोकः । तावता तस्य द्वयेन सहैकत्र पाठोऽनपेक्षितः । पृथक् पठितयोरप्युपदेशक्रमनियामकमात्रमेतदिति सुवचत्वात् । तद्वदष्टाक्षरस्य द्वयस्य चैकत्र सम्भूय स्थितिर्नापेक्षिता—अथापि अष्टाक्षरप्रकरणेऽत्र उपदेश इति व्याख्यातृभिरुक्ततया अथात इत्यत्रायमभिप्रायः सुस्वीकरः । यद्यपि अष्टाक्षरमन्त्र एव, 'कैवल्यं भगवन्तञ्च मन्त्रोऽयं साधयिष्यति' इत्युक्ततया मोक्षविद्याकरणभूतः—अथापि जपपुरश्चरणादिसापेक्षमन्त्रमूलं फलं प्राप्तुमशक्तान् प्रति सकृदुच्चारणेन संसारमोचकोऽयं मन्त्रविशेषः **अथात** इत्यारभ्यत इति ध्येयम् ।

**श्रीमद्द्वयोत्पत्तिः** । द्वयस्य श्रीमत्त्वं विशदज्ञानविरहिणः पुरुषस्य समुदायज्ञानमात्रेणापि प्रपत्तौ करणतया स्थित्यर्हत्वम् । द्वयस्योत्पत्तिः अज्ञातस्य ज्ञापनम् । **वाक्यो द्वितीय** इत्यादिषु व्यत्ययश्छान्दसः । वाक्यद्वयात्मकमित्यर्थः । इदञ्च स्थूलरीत्या । वाक्यत्रयरूपत्वस्यापि स्वीकारात् । उत्तरखण्डं वाक्यद्वयात्मकं ह्यभिमतं द्वयार्थविवरणे । एवं तर्हि अस्य द्वयमिति कथं नामेति चेत्—उपायोपेयोभयप्रतिपादकतया द्वयत्वम् । श्रीमान् नारायण उपायः प्रथमखण्डे उक्तः । तादृश एव स उपेय उक्तो द्वितीये । यस्य प्रपत्तिरूपस्य साध्योपायस्यानुष्ठाने स सिद्धोपायो भवेत्, यस्य च मोक्षस्य प्राप्तौ स उपेयो भवेत्—तदुभयमप्यत्र निरूप्यते तच्छेषतया । अत एवोक्तम्, 'उपायोपेयरूपार्थद्वयप्रतिपादकत्वात् द्वयम् वरणसमर्पणयोः खण्डद्वये क्रमेण प्रतिपादनात् द्वयमित्यपि केचित्' इति श्रीमद्रहस्यत्रयसारे । द्वितीयपक्षश्चात्र निर्दिष्टः फलान्तरकामनयापि द्वयस्य प्रयोज्यत्वे तत्र द्वयत्वनिर्वाहायेति ध्येयम् ।

वाक्यो द्वितीयः। षट् पदानि । अर्था(र्धा)दश । पञ्चविंशति अक्षराणि । पञ्चदशाक्षरं पूर्वम् । दशाक्षरं परम् । नवाक्षरं प्रथमपदम् । द्वितीयतृतीयचतुर्थ त्र्यक्षराणि । पञ्चाक्षरं पञ्चमम् । द्व्यक्षरः षष्ठः । एकाक्षरपदः प्रथमः । एकाक्षरो द्वितीयः । चतुरक्षरस्तृतीयः । चतुर्थपञ्चमषष्ठसप्तमा एवं त्र्यक्षराणि । अष्टमश्चतुरक्षरः । द्व्यक्षरो नवमः । दशमो द्व्यक्षरः । एतन्मन्त्रस्य प्रतिपत्तिः (एतन्मन्त्रस्य(श्च) प्रपत्तिः । )

पूर्वो नारायणः प्रोक्तोऽनादिसिद्धो मन्त्ररत्नः सदाचार्यमूलः ।
[1]आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः ।

1. क्वचित् कोशे, 'आचार्यो वेदसंपन्नः' इति पादमुपक्रमस्थं पठित्वा सर्वश्लोकावसानस्थं, 'तस्माद् गुरुतरो गुरुः' इति पादमात्रं प्रत्याहारेणेव पठितम् ।

---

अथ, 'श्रीमन्नारायण स्वामिन् दासोऽहं तव तस्य वै । परमीप्सुस्त्वमेवार्थमनुकूलो विवर्जयन् । प्रातिकूल्यं सुविस्रब्धः संप्रार्थ्य शरणं परम् । व्रजामि युष्मच्चरणं तत्रैवाहं मयाऽर्पितः' इति श्लोकद्वयात्मके प्रपत्तिमन्त्रान्तरेऽपि द्वयमिति व्यवहारसद्भावात् तद्व्यावृत्तं प्रकृतमन्त्रस्वरूपमाह **षट्पदानीत्यादिना** । **अर्थाः दशेति** पाठे, श्रीः, पुरुषकारत्वम्, नारायणः, दिव्यमङ्गलविग्रहः, उपायत्वम्, प्रपत्तिः, उपेयत्वम्, कैङ्कर्यम्, अनिष्टनिवृत्तिः, अनिष्टभूतं विरोधिस्वरूपञ्च क्रमेणोच्यन्त इति भाव्यम् । पुरुषकारः, उपायोपेयात्मकसिद्धवस्तु भूतमीश्वरतत्त्वम्, साध्योपेयम्, साध्योपायः, तदङ्गानि च पञ्चेति वा दशार्थाः । **अर्धाः दशेति** पाठे **अर्धः** शकलमिति, श्री-मत्-नारायण-चरणौ-शरणं-प्र-पद्ये-श्रीमते-नारायणाय-नमः इति शकलदशकं ग्राह्यम् । अथवा श्रीशब्दस्य मतुप्प्रत्ययस्य च, **एकाक्षरपदः प्रथमः एकाक्षरो द्वितीय** इति प्रथमखण्डे पृथक्परिगणनात् तथैवोत्तरखण्डेऽपि परिगणने, श्री-मत् नारायण-चरणौ-शरणं-प्रपद्ये-श्री-मते-नारायणाय-नमः इति अर्धाः दश भाव्याः ।

**पञ्चविंशति अक्षराणि** । खण्डद्वयगतानि अक्षराणि पञ्चविंशतिरित्यर्थः । **पञ्चदशाक्षरं पूर्वम्** । पूर्वखण्डे अक्षराणि पञ्चदश । शिष्टं स्पष्टम् ।

**आचार्य** इत्यादयः श्लोकाः येऽत्र पठिताः, तत्रान्तिमश्लोकद्वयम्, 'मन्त्रराजमिमं विद्याद् गुरुवन्दनपूर्वकम्' इत्यर्धानन्तरं पठित्वा, उपरि, 'नानुकूल्यं न नक्षत्रं' इत्यादि च पठित्वा, सर्वमिदं प्रपत्तिमन्त्रान्तरोक्तं द्वयविषयेऽपि ग्रहीतुं साम्प्रतमित्युक्तं द्वयाधिकारे । स च मन्त्रराजः तद्विष्णोरिति मन्त्र इति तत्र व्याख्या । अत्रोपनिषदि तद्घटकश्लोकद्वयसद्भावेऽपि अंशान्तराभावात् विशिष्टस्य स्थलान्तरगतत्वोक्तिः । अतस्तत्रत्यौ श्लोकावत्रत्यावपीत्युक्तौ न दोष इति

मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्रार्थविच्छुचिः ।
गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः ।
एवं लक्षणसम्पन्नो गुरुरित्यभिधीयते ।
आचिनोति च शास्त्रार्थान् आचारस्थापनादपि ।
स्वयमाचरते यस्तु तस्मादाचार्य उच्यते ।
गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते ।
गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ।
गुरुरेव परा विद्या गुरुरेव परं धनम् ।
गुरुरेव परः कामो गुरुरेव परायणम् ।
यस्मात् तदुपदेष्टाऽसौ तस्माद् गुरुतरो गुरुः ।

यः सकृदुच्चारितः संसारविमोचनो भवति । [यस्य सकृदुच्चारणेन संसारविमोचनं भवति । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ।] [यः सकृदुच्चारयति, तस्य संसार [वि] मोचनं भवत्येव ।]

---

ध्येयम् । सदामन्त्रार्थविदिति । ''द्वयमर्थानुसंधानेन सह सदैवं वक्ता'' इति श्रीभाष्यकारगद्यसूक्तेरिदं मूलं बोध्यम् ।

**आचारे**ति । 'आचारे स्थापयत्यपि' इति, यस्तु इत्यत्र,. 'यस्मात्' इति च पाठ उदाहरणवशाद् ज्ञायते ।

**यः सकृदुच्चारित** इति । अत्र, 'यः सकृदुच्चारः संसारतारको भवति' इत्यानुपूर्वी तत्र तत्रोदाहृताऽस्ति ; अथाप्यर्थतो न भेद इति मन्तव्यम् । द्वयमन्त्रस्य सकृदुच्चारणं मोक्षसाधनं भवतीति मुमुक्षुर्द्वयं सकृदुच्चरेदित्युक्तं भवति । ननु प्रपत्ति मन्त्रान्तरापेक्षयाऽस्यायं विशेषो न लक्ष्यते । किमाचार्यसकाशात् यत् अध्ययनरूपं प्रथमोच्चारणम्, तावदेवेति तदुपरि अनुच्चारणं सकृदित्यभिमतम्, उत प्रपत्त्यनुष्ठानकाले सकृदुच्चारणम् । नाद्यः, अपसिद्धान्तात् । उच्चारणानूच्चारणरूपग्रहणाध्ययनानन्तरं धारणाध्ययनमपि कृत्वा प्रपत्त्यनुष्ठानकाले पुनः प्रयोगस्य सर्वसंप्रतिपन्नत्वात् । नान्त्यः ; सर्वस्यापि मन्त्रस्य मन्त्रार्थानुष्ठानकाले सकृदेवोच्चारणस्य स्वतः सिद्धतया सकृत्पदवैयर्थ्यात् । न चैतन्मन्त्रार्थः कश्चित् पुन पुनरावर्तनीयस्वरूपकर्मविशेषात्मा ; व्रीह्यवघातबर्हिर्लवनादिवत् ; येन क्रियाभ्यासान्मन्त्राभ्यासे प्रसक्ते तद्वारणार्थं सकृत्पदमिति वर्णनं मन्येतापि । सकृत् कर्तव्यस्य प्रपदनस्यैवार्थतया तदर्थं सकृदेव मन्त्रोच्चारणसिद्धेरिति

चेत् – उच्यते । न प्राथमिकगुरुमुखोच्चारणमात्रस्य सकृत्ता । अत एव गुरुप्रदानज्ञानपूर्वक-सकृदुच्चारणमिति अर्थज्ञानानन्तरभाव्युच्चारणे सकृत्त्वोक्तिः । गुरुणा द्वयप्रदानकाले यत् प्रथम-मुच्चारणम्, तदनन्तरम् जपपुरश्चरणादिकमन्तरा आदिमन्त्रान्तरेष्विव विनैव प्रपत्तिकाले प्रयोगः कार्यकर इति तात्पर्यात् । तथा च सकृदित्यस्य जपादिनिरपेक्षेत्यर्थः । अध्ययननिरपेक्षत्वस्यापि विशेषादस्त्विति तु न प्रसक्तिः, सदाचार्यमूल इति उपक्रमात् । एवमन्यदपि सकृच्छब्दस्य प्रयोजनं वर्णयन्ति, यथा–प्रपत्तिमन्त्रान्तरस्य प्रपत्त्यनुष्ठानार्थं संकल्प्य प्रयोगे कृते यदि अङ्गपञ्चक-संपन्नप्रपत्त्यनुष्ठानक्रमस्मृतिभ्रंशेन वा कारणान्तरेण वा प्रपत्त्यनुष्ठानं प्रतिरुद्धं भवेत्, तदा कालान्तरे तदनुष्ठाने प्रवृत्तः पुनस्तं मन्त्रमुच्चारयेत्; उच्चारणादेः सर्वस्यानुष्ठाने साङ्गत्वस्य प्रयोगविधिकल्प्य-त्वात् । अयं तु द्वयमन्त्रः, 'सकृदुच्चार' इति उच्चारणे सकृत्त्वविधेः पुनरुच्चारणं विनैव स्मर्यमाणतयैव प्रपत्त्यनुष्ठापको भवतीति न पुनः प्रयोक्तव्य इति । तथा च संकल्प्य द्वयमुच्चार्य अननुष्ठितप्रपत्तिः पश्चात् वाक्पाटववैकल्ये प्राप्तेऽपि अवहितेन मनसा अङ्गपञ्चकसंपन्नं समर्पणमनुतिष्ठन् कृतकृत्यो भवतीति मन्त्रस्यातिशय इति । सर्वसाधारणेनेदं सकृत्त्वमावृत्त्यनपेक्षत्वपरम् ।

**संसारविमोचन** इति । नन्वेवमुच्चारणस्यैव संसारविमोचनत्वे प्रपत्त्यनुष्ठानमपि मा भूत् । श्रुतिस्वारस्यादिति चेन्न–प्रयोगसमवेतार्थस्मारकत्वस्यैव मन्त्रस्वभावत्वात् स्मरणस्य चानुष्ठानार्थत्वात् प्रपत्तेस्त्यागायोगात् । तदुक्तं न्यासविंशतावाचार्यैः 'नेहाभिक्रान्तिनाश' इति श्लोके,

> "तस्मात् क्षेत्रे तदर्हे सुविदितसमयैर्देशिकैः सम्यगुप्तं
> मन्त्राख्यं मुक्तिबीजं परिणतिवशतः कल्पते सत्फलाय ॥"

इति । अत एव प्रपत्तेः मन्त्रोच्चारणात् पूर्वानुष्ठेयत्वं वा उच्चारणाङ्गत्वं वा नैव शक्यशङ्कम्–प्रमाण-तर्कविरोधात् । न च वचनबलात् मन्त्रस्यास्याधिकारिविशेषे प्रयोगसमवेतार्थस्मारकत्वं विना स्वोच्चारणमात्रान्मोक्षहेतुत्वमेवास्तु इति वाच्यम्–यत्र यत्र प्रमाणे ज्ञानातिरिक्तस्य मोक्षसाधन-त्वमुक्तम्, तस्य साक्षात् तथात्वे न तात्पर्यम्, किंतु ज्ञानद्वारैवेति ज्ञापनायैव, 'नान्यः पन्था अयनाय विद्यते' इति निषेधश्रुतिप्रवृत्तेः । अतः, 'अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति' इति वचनात् निक्षेपस्य मध्ये आवश्यकतया संसारविमोचनत्वं नाम संसारविमोक्षहेतुप्रपत्तिहेतुत्वरूपमेकमेवाज्ञाभिज्ञसाधारणमत्रोक्तम्, श्रुतेरस्याः सर्वाधिकारि साधारण्यादिति । तर्हि उक्तेः प्रपत्तिद्वारैव हेतुत्वे उक्तिः कथं पृथक् उपायत्वेन परिगण्यत इति चेत् – मन्त्रोक्त्यावदर्थविशदज्ञानविरहेऽपि तदधीने अविशदभरसमर्पण एव सत्यपि सर्वापेक्षितांशज्ञापनक्षमतया पूर्णप्रपत्तिगर्भमन्त्रोच्चारणं कृतमिति तादृशमन्त्रोच्चारणरूपाङ्गप्राबल्यं पुरस्कृत्यैव भगवान् एतदनुष्ठिताविशदप्रपत्तिस्वीकारेणानुगृह्णातीति उक्तिप्रशंसनार्थं तथोक्तेः । किञ्च मन्त्राणां स्वप्रकाश्यमानेऽर्थे विनियोग इति लिङ्गबलात्सिद्धम् । मन्त्रश्चायं श्रीमन्नारायणविषये प्रपत्तिं कण्ठतो वक्ति । प्रपत्तिर्नाम प्रार्थनान्वितस्वदुस्तरभरसमर्पणरूपेति तदर्थस्वाभाव्यात्, क्षुद्रफलादिभगवत्प्राप्तिपर्यन्त सर्वफल साधनतायाः परश्शतप्रमाणप्रतिपन्नत्वाच्च प्रपत्तौ सर्वफलार्थि-नाऽपि प्रपत्तिमनुतिष्ठता मन्त्रः परिग्राह्योऽयमिति सिद्ध्यत्येव । तदेवं प्राप्ताप्राप्तविवेके क्रियमाणे, 'सकृदुच्चारः संसारमोचनो भवती' ति वाक्यमंशान्तरस्यार्थसिद्धत्वात् सकृत्त्वविधानमात्रे-

[सर्वान् कामानवाप्नोति] सर्वपुरुषार्थसिद्धिर्भवति । न च पुनरावर्तते इति य एवं वेद । इत्युपनिषत् ।

॥ इति द्वयोपनिषत् ॥



(२)

( द्वयोपनिषदो मातृकान्तरपाठः )

हरिः ओम् — स वा एष महानज आत्मा अन्नादो विन्दते वसु ।

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।

तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

इति होवाच । ऋग्वेदं प्रपद्ये । यजुर्वेदं प्रपद्ये । सामवेदं प्रपद्ये । इतिहासपुराणानि प्रपद्ये । सत्यं प्रपद्ये । श्रद्धां प्रपद्ये । परमात्मने प्रपद्ये । भागवताय प्रपद्ये । वासुदेवाय प्रपद्ये । ओं प्रपद्ये । नमः प्रपद्ये । श्रीं प्रपद्ये । श्रियं प्रपद्ये ।

२. अयं द्वयोपनिषत्पाठः श्रीविद्वद्वरिष्ठ श्रीगोष्ठीपुराभिजन श्रीसौम्यनारायणाचार्यचरणानुजश्रीरामदेशिकाचार्यदत्ते तालकोशे उपलब्ध इति वेदान्तदीपिकाख्यायां मासिकपत्रिकायां प्रकाशितः ।

---

द्व्यपरम् । अतश्च, 'सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति' इति अक्षरविशेषद्वयस्य चास्य च न विशेष इति न शङ्कनीयम् । श्रीप्रश्नसंहिताद्यनेकोपबृंहणबलेन चास्यैष महिमा स्थापितो भवति । तत् सिद्धं अध्ययनानन्तरं विशदज्ञानपूर्वं वा समुदायज्ञानपूर्वं वा जपपुरश्चरणादिरूपावृत्तिनिरपेक्षमेव एतद्द्वयोच्चारणं स्वप्रमेयप्रपत्तिरूपाङ्गिद्वारा मोक्षपर्यन्तसर्वफलसाधनं भवतीति कृतं विस्तरेण । **विवेचितश्चैतदनुबन्धि सर्वं पूर्वाचार्यैः, अस्मदाचार्यैः श्रीरङ्गरामानुजमुनिभिः, अस्माभिश्चान्यत्र विस्तरेणेति नेह प्रतन्यते ।** सकृत्त्वमिदं संसारविमोचनरूपफलांश एव, न त्वन्यफले उपयुज्यते इति न मन्तव्यम् । परमफलत्वात्तु तस्य प्राधान्येनोक्तिरिति सुबोधयिषया सर्वमपि फलं संगृह्णाति, **सर्वपुरुषार्थसिद्धिर्भवति, न च पुनरावर्तत** इति ॥

२

अथ मातृकान्तरमधिकृत्य किञ्चिदुच्यते । अत्र स वा एषइति वाक्यं सर्वफलप्रदसिद्धोपायपरम् । विन्दत इति णिजर्थगर्भमिह । यो ब्राह्मणमिति प्रपत्त्यादिकथनम् । ऋग्णित्यादि प्रपत्तेः

यद्वेदा दिव्यगायत्री जयति । तदेषाऽभ्युक्ता । तदेव भूतं तदुपासितव्यम् । तत् पूर्णसौन्दर्यं लक्ष्म्याः । तदेवममृतं सदानन्दं सत्यम् । तत् द्वयम् । सर्वं तत् सकृदुच्चारणो (सकृदुच्चारः संसारमोचनो ?) भवति । श्रीमन्नारायणचरणौ शरणं प्रपद्ये । इदं पूर्णमदः पूर्णं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । सर्वं पूर्णमिति । स होवाच— श्रीमते नारायणाय नमः ॥

---

सर्ववेदप्रसिद्धिज्ञप्तये । **सत्यं** परं ब्रह्म । **श्रद्धां** लक्ष्मीम् । विश्वासमुख्यत्व वा **श्रद्धा**मित्युच्यते । तदर्थं **सत्य**मिति सर्वशङ्कातङ्कोन्मूलनमित्यादि भाव्यम् । अत्रत्यं **सत्यं तद्द्वयम् सकृदुच्चारः संसारमोचनं भवती**ति वाक्यं सारप्रकाशिकायामुपात्तम । सारास्वादिन्यां यदुक्तम्, 'पूर्वखण्डं पठित्वा पूर्णमद इत्यादिपाठानन्तरं उत्तरखण्डस्यापि पाठः कृत' इति, तदप्यत्रैव मातृकायां लक्ष्यते । इदं मनसिकृत्यैवाचार्यैः, मन्त्रोऽयं विभज्याधीतः संमेल्यानुसंधेयत्वेन विहितश्चेत्युक्तमिति चावसीयते । अतो मातृकेयमादरणीया लक्ष्यते । किं पूर्वदर्शितो भागः अयश्चेति सर्वेयमेकैवोपनिषत्? किं वा अग्निरहस्ये बृहदारण्यके चैकस्यामेव शाखायां शाण्डिल्यविद्यायाः विशकलितपाठ इव कठशाखायामेव स्थले विभिन्ने पृथगनयोः पाठः इत्यादिविमर्शो विमर्शकानां बुद्धिशक्तिमनुरुध्य यथातथा भवतु । स्थितं तु प्रकाश्यते । एकस्यामुपनिषदि श्रूयमाणं वाक्यमुपनिषदन्तरेऽपि तत्रतत्र पठ्यमानं बहुशो दृष्टम् । तथेहापि श्रुतानि वाक्यानि उपनिषदन्तदृष्टानीत्यैव सन्ति । तथाहि — अत्र **स वा एष महानज आत्मे**ति वाक्यं बृहदारण्यके (६.४) श्रुतप्रायम् । **यो ब्रह्माण**मिति श्वेताश्वतरीये । **सर्वं तदि**त्यादिना संमिलितोच्चारणं विधीयते । पूर्वखण्डपाठः **श्रीमन्नारायणे**ति । अस्य खण्डस्योत्तरखण्डमेलनेन पूर्णत्वसंपादनार्थोऽर्थवादः **इदं पूर्ण**मित्यादिः । बृहदारण्यके (७.१) पूर्णमद इत्यादिरयं मन्त्रः पठ्यते । **श्रीमते** इत्यादिरुत्तरखण्डः । बृहदारण्यक एव पूर्णमद इत्येतत्पाठानन्तरम्, "ओं खं ब्रह्म । खं पुराणम् । वायुरं खमिति ह स्माह कौरव्यायणीपुत्रः । वेदोऽयं ब्राह्मणा विदुः वेदैनेन यद् वेदितव्यम्" इत्यानुपूर्वी लक्ष्यते । किं सैवेह लेखकप्रमादात् खंब्रह्मेत्यादिना किञ्चिदन्यथाभूता, उत परमार्थरीतिरियमिति विवेचकविमृश्यम् । नूनमिदं सर्वम्, द्वयस्यापि प्रणवः पूर्वमपेक्षितः प्रणवाधिकर्तृपुरुषविषये इति ज्ञापनार्थं प्रवृत्तमिति बृहदारण्यकानुसारेण भावनीयम् । एतन्मन्त्रार्थश्च रहस्यग्रन्थेषु विशदमनुसंधेयः । अत्र श्रीशब्दार्थनिर्वचने अन्यत्र स्थितोऽस्मदीयोऽयं श्लोकोऽप्यनुसंधानमर्हति ; य एषः—

श्रीस्त्वं श्रिता शरणमीप्सुभिरार्तरावं
श्रुत्वा श्रिता सपदि शार्ङ्गिभुजान्तरालम् ।

खं ब्रह्म । खं वायुः । खं पुराणम् खमितिहासः । खं ध्रायणीपुत्रः । वेदोऽयं ब्रह्मणो विदुः । वेदायेन वेदितव्यमिति । य एवं वेद । इत्युपनिषत् । हरिः ओं ॥ श्रीरस्तु । शुभमस्तु ।



---

तं श्रावयस्यथ शृणासि समस्तमेनः
श्रीणासि च प्रगुणदास्यविधादिभिर्नः ॥ इति ।

तत् सिद्धं सर्वोपनिषत्प्रतिपाद्यः परब्रह्मभूतः पुरुषोत्तमः श्रीमन्नारायण एव भक्त्या प्रपत्त्या वा प्रसाद्यमानः सर्वमपि पुरुषार्थं प्रयच्छतीति सर्वं समञ्जसम् ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
श्रीवीरराघवार्येण महोपनिषदस्तथा ॥
नारायणोपनिषद पुंसूक्तव्याकृतेरपि ।
द्वयोपनिषदश्चैवं परिष्कारः क्रमात् कृतः ।

स जयति यतिराजः सोऽपि वेदान्तसूरिः
तदुभयपदसेवास्वादधन्याश्च सन्त. ।
तदनघवचनैर्व्यक्ततत्त्वार्थं सर्व-
श्रुतिगणसमधीत्या साधु सर्वे जयन्तु ॥

श्रीमद्वेदवतंसलक्ष्मणमुनिश्रीपादसेवी श्रुतीः
श्रुत्वा श्रीयुतरङ्गलक्ष्मणमुनिश्रेष्ठान्महिष्ठोक्तिभिः ।
वात्स्यः श्रीशहयास्यवीक्षणपदं विख्यातनानाकृतिः
विश्वक्षेमपरो व्यधादिति परिष्कारः परो गृह्यताम् ॥

ईशाद्या याः श्रुतय उदिताः श्रीमहारण्यकान्ताः
याश्च श्वेताश्वतरमुखगाः श्रीद्वयान्ता दशान्याः ।
एताः प्राच्यप्रवरविहितव्याक्रियायुक्त्ययुक्ति-
प्राप्तद्वैधाः समुचितपरिष्कारभव्या जयन्ति ॥

इति श्रीवत्सवंशमुक्ताफलायमान सच्चक्रवर्ति श्रीचक्रवर्त्यार्यतनूद्भवस्य
श्रीमद्वेदान्तरामानुजसंयमीन्द्रपदारविन्दमधुव्रतस्य श्रीमद्रङ्गरामानुज-
संयमीन्द्रचरणारविन्दसेवासंप्राप्तसकलवेदान्तार्थस्य
तर्कार्णवादिबिरदभाजः वीरराघवाचार्यस्य
कृतिषु उपनिषद्भाष्यपरिष्कारः ।

शुभमस्तु ॥

श्रीः

# महोपनिषदादिचतुष्टयार्थसंग्रहकारिकाः



नारायणस्य पारम्यं ब्रह्मेशाद्युद्भवस्ततः ।
अन्तर्यामितयैक्यञ्च **महोपनिषदी**रितम् ॥ १ ॥

ऋग् यजुः साम चाथर्ववेद इत्येदंशभाक् ।
**नारायणोपनिषद**प्याह नारायणं परम् ॥ २ ॥

ब्रह्मरुद्रेन्द्रमुख्यानां ततो जन्म तदात्मताम् ।
श्रीमदष्टाक्षरमनुं प्रणवस्थाक्षरादि च ॥ ३ ॥

तत्तदंशक्रमेणोक्त्वा मुक्तिहेतोरितो मनोः ।
सर्वश्रुतिजपाद्याप्यं फलञ्च बहु साऽब्रवीत् ॥ ४ ॥

प्रोक्तः **पुरुषसूक्ते** स पुरुषोऽद्भूतविग्रहः ।
प्रकृतिप्राकृतात्मा च त्रिपाद् यस्यामृतं दिवि ॥ ५ ॥

ब्रह्माणं जनयित्वा तद्यज्ञसंराधितः श्रुतीः ।
लोकान् प्राणभृतः सर्वान् चातुर्वर्ण्यादिभागिनः ॥ ६ ॥

निर्माति निखिलैरीड्यः स्थितश्च तमसः परे ।
स उपास्यः ; ततो मुक्तिः ; नान्यः पन्था इतीरितम् ॥ ७ ॥

**द्वयोपनिषदि** प्रोक्तः श्रीमान् नारायणः परः ।
सकृदुच्चारणे सर्वफलदश्च परं द्वयम् ॥ ८ ॥

श्रीमद्वेदान्तसौमित्रिमुनिपादाब्जसेविना ।
श्रीरङ्गलक्ष्मणाभिख्यमुनिसेवाप्तसद्धिया ॥ ९ ॥

तर्कार्णवाद्युपाख्येन नानासद्ग्रन्थकारिणा ।
निखिलोपनिषद्भाष्यपरिष्कारविधायिना ॥ १० ॥

श्रीवीरराघवार्येण वात्स्यसच्चक्रवर्तिना ।
इत्थं कृता उपनिषदर्थसंग्रहकारिकाः ॥ ११ ॥

सर्ववेदान्तवेद्यः स वेदतद्वेदिरक्षकः ।
प्रीयतां श्रीहयग्रीवः सर्वविद्याधिदैवतम् ॥ १२ ॥

**इति**

**वात्स्यसच्चक्रवर्तिनो**

**वीरराघवाचार्यस्य** कृतिषु

**उपनिदषर्थसंग्रहकारिकाग्रन्थः**

**संपूर्णः ।**

**श्रीमते श्रीनिवासपरब्रह्मणे नमः ।**

**श्रीरस्तु ॥ शुभमस्तु ॥**

